KÂVYAMÂLÂ. 87.

# THE CHAITANYACHANDRODAYA

(A DEVOTIONAL DRAMA)

OF

KAVIKARṆAPÛRA.

EDITED BY

PAṆḌITA KEDÂRANÂTHA,

SON OF

MAHÂMAHOPÂDHYÂYA PAṆḌITA DURGÂPRASÂDA

AND

WÂSUDEV LAXMAN S'ÂSTRÎ PAṆS'ÎKAR.

Second Edition.

PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF THE "NIRNAYA-SAGAR" PRESS,

Bombay.

1917.

*Price 1¼ Rupees.*

काव्यमाला. ८७.



श्रीकविकर्णपूरविरचितं

# चैतन्यचन्द्रोदयम् ।

नाम नाटकम् ।



जयपुरमहाराजाश्रितपण्डितश्रीदुर्गाप्रसादतनयपण्डितकेदार-
नाथशर्मणा तथा मुम्बापुरवासिपणशीकरोपाह्वविद्वद्वर-
श्रीलक्ष्मणशर्मतनुजनुषा वासुदेवशर्मणा च
संशोधितम् ।

द्वितीयं संस्करणम् ।

तच्च
मुम्बय्यां
तुकाराम जावजी श्रेष्ठिभिः
स्वीये निर्णयसागराख्यमुद्रणयन्त्रालये स्वायसाक्षरैर्मुद्रयित्वा प्रकाशितम् ।



शाकः १८३९, खिस्ताब्दः १९१७.





मूल्यं १ सपादो रूप्यकः ।



# भूमिका।

## कविकर्णपूरापरनामधेयः परमानन्ददासकविः।



श्रीकृष्णचैतन्यपार्षदस्य वैद्यवंशीय**शिवानन्दसेन**स्य तनूजन्मा **परमानन्ददा-साभिधानो** महाकविरयं वङ्गप्रदेशे नदियाप्रान्तवर्तिन्यां काञ्चनपल्ल्यां १५२४ ख्रिस्ताब्दे जन्म लेभे।

चैतन्यमहाप्रभोः प्रसादाद्बाल्य एव लब्धकविलशक्तिरयं प्रथममरचयत्पद्यमेतत्—

'श्रवसोः कुवलयमक्ष्णोरञ्जनमुरसो महेन्द्रमणिदाम।
वृन्दावनरमणीनां मण्डनमखिलं हरिर्जयति॥'

पद्ये चास्मिन् श्रवसोः कुवलयमिति प्रथममेव कर्णाभरणार्थवाचकविशेषणसंनि-वेशाच्चैतन्यमहाप्रभुः 'कविकर्णपूरः' इति नाम्ना प्राख्यापयदेनमिति किंवदन्ती

---

१ **श्रीकृष्णचैतन्यः** श्रीहट्टनिवासिनो जगन्नाथमिश्रात्तद्धर्मपत्न्यां शचीनामिकायां १४८५ ख्रिस्ताब्दे नवद्वीपजनपदे प्रादुर्बभूव। तत्प्रमाणीभूतं पद्यमेतदति प्रसिद्धम्—

'शाके मुनिव्योमयुगेन्दु१४०७गण्ये शुभोदये फाल्गुनपौर्णमास्याम्।
त्रैलोक्यभाग्योदयपुण्यकीर्तिः प्रभुः शचीनन्दन आविरासीत्॥' इति।

एष चैतन्यसंप्रदायेत्याख्यस्य नूतनवैष्णवसंप्रदायस्य प्रवर्तयितासीत्। एषोऽष्टाचत्वारिं-शद्वर्षं यावन्नानालीलालास्समासाद्य भूमौ क्रीडन् १५३३ ख्रिस्ताब्दे कीर्तिशेषतां गत इति वङ्गभाषया रचितेन निम्नलिखितेन पद्येनावसीयते।

'श्रीकृष्णचैतन्य पृथ्वीते अवतरि
अष्टचल्लीशवत्सर प्रकट विहरि।
चौद्दशतसात शाके जन्मेर प्रमाण
चौद्दशतपञ्चायन्ने हइला अन्तर्धान॥'

(१६१५ ख्रिस्ताब्दे श्रीकृष्णदासरचिते चैतन्यचरितामृते प्रथमखण्डे त्रयोदशे परिच्छेदे।)

ऑफ्रेक्टपण्डितस्तु स्वीये ग्रन्थग्रन्थकृत्कोषे (Alphabetical Register of Sanskrit works and authors) १५२७ ख्रिस्ताब्देऽस्य निधनकालमभिधत्ते।

---

1. "चैतन्य or चैतन्यदेव Originally Vishvambhara, son of Jagannâtha, brother of Nityânanda, born in 1484, died in 1527."

—Theodor Aufrecht's Catalogus Catalogorum. Part I, P. 190.

महाकविकर्णपूरेण विरचिता अद्यावधि विदिता ग्रन्थास्त्वेते—

(१) **आर्याशतकम्**—नाद्यावधि समासादितमस्माभिः । अक्षयकुमारदत्तमहोदयस्तु[1] स्वीये 'उपासकसंप्रदाय'नाम्नि वङ्गभाषानिबद्धे निबन्धे प्रसङ्गवशात्कविकर्णपूरकृतिषु 'आर्याशतकस्य' स्थाने 'आचार्यशतकम्' इत्याचख्यौ । 'भारतवर्षीयकविदिगेर समयवर्णन' इत्याख्यस्य वङ्गभाषीयग्रन्थस्य रचयिता हरिमोहनप्रामाणिकस्तु 'श्रवसोः कुवलय—' इत्यादिपद्यमार्याशतकस्य प्रथमश्लोकत्वेनोदाजहार । तथा कविकर्णपूरकृतिष्वार्याशतकमेवाद्यत्वेन निश्चिकायेति प्रामाणिकवचनमेव प्रामाणिकमिति प्रतीयते ।

(२) **चैतन्यचरितामृतं** महाकाव्यम्—काव्यमेतदष्टादशवर्षवयस्केन कविकर्णपूरेण १५४२ खिस्ताब्दे निर्मितमिति तदीयान्तिमश्लोकेनावगम्यते—

'वेदा रसाः श्रुतय इन्दुरिति प्रसिद्धे
शाके तथा खलु शुचौ सुभगे च मासि ।
वारे सुधाकिरणनाम्न्यसितद्वितीया-
तिथ्यन्तरे परिसमाप्तिरभूदमुष्य ॥'

(३) **आनन्दवृन्दावनचम्पूः**—द्वाविंशतिस्तवकात्मिकैषातिप्रसिद्धा ।

(४) **चमत्कारचन्द्रिका**—कृष्णलीलावर्णनरूपं काव्यमेतन्नाधिगतमस्माभिः ।

(५) **अलंकारकौस्तुभः**—अलंकारसंदर्भोऽयं ग्रन्थकृत्कृतयैव किरणाख्यया व्याख्यया संवलितः प्राप्यते । एषोऽपि यथावसरं त्वरितमेव काव्यमालायां मुद्रयिष्यते ।

(६) **कृष्णलीलोद्देशदीपिका**—
(७) **गौरगणोद्देशदीपिका**— } धर्मग्रन्थावेतौ ।

(८) **वर्णप्रकाशः कोषः**—**अमरमाणिक्य**सूनो **राजाधर**स्यार्थं निर्मित एष इति ग्रन्थग्रन्थकृत्कोषाज्ज्ञायते[2] । कोऽयममरमाणिक्य इति तु न सम्यगवबुद्धमस्माभिः ।

---

तल्लेखस्तु भ्रान्तिमूलकत्वादुपेक्ष्य एव । श्रीकृष्णचैतन्यस्य चरित्रात्मकं कविकर्णपूरविरचितं चैतन्यचरितामृतं नाम महाकाव्यं शीघ्रमेव काव्यमालायां प्रकाशयिष्यते तेन चैतन्यस्य तत्समकालीनानां तत्पार्श्ववर्तिनां रूपसनातनादीनां महाकवीनां च वृत्तं स्पष्टं ज्ञास्यते ।

---

1. Religious sects of the Hindus by Akshapakumâradatta. Part II, P. 168.

2. "Varṇaprakâça, a Vocabulary written for Rajâdhar, son of Amarmanikya." Cat. Cat. Part I., P. 86.

(१) **चैतन्यचन्द्रोदयं नाटकम्**—कपिलेश्वरदेवात्मजपुरुषोत्तमदेवसूनोर्नीलगिर्यधीशस्य गजपतिप्रतापरुद्रदेवस्याज्ञया निर्मितमेतदिति प्रस्तावनायां स्फुटमेव। १५१९ ख्रिस्ताब्दे पञ्चपञ्चाशद्वर्षवयस्केन कविना निर्वर्तितमेतदिति तदन्तिमेनैतेन पद्येन ज्ञायते।

'शाके चतुर्दशशते रविवाजियुक्ते
गौरो हरिर्धरणिमण्डल आविरासीत्।
तस्मिंश्चतुर्नवतिभाजि तदीयलीला-
ग्रन्थोऽयमाविरभवत्कतमस्य वक्त्रात्॥'

राजेन्द्रलालमित्रमहोदयो हरिमोहनप्रामाणिकश्च १४९४ शकसंवत्सरे ( १५७२ ख्रिस्ताब्दे ) ग्रन्थनिर्माणकालं वदतः। तयोः कथनं तु प्रमादमूलकमेव। तस्मिन्निति पदेन गौरे हरौ चतुर्नवतिभाजि सतीति स्पष्टप्रतिपत्तेः। ऑफ्रेक्टपण्डितस्तु चैतन्यचरितामृतपूर्तेरनुपदमेव[1] १५४३ ख्रिस्ताब्दे नाटकनिर्मितिकालं ब्रूते। तल्लेखोऽपि निर्मूल एवेति सम्यग्विभावयन्तु प्राचीनतत्त्वबुभुत्सवो विद्वांसः।

नाटकमेतत् पूर्वं Royal Asiatic Society द्वारा मुद्रितमप्यधुना दुष्प्रापमासीदिति पुनस्तदाधारेणैव काव्यमालायां मुद्रितम्। अस्य मुद्रणे शेमुषीदोषादक्षरयोजकदोषाद्वा यानि स्खलितानि स्युस्तानि सानुकम्पं क्षाम्यन्तु गुणैकपक्षपातिनो विद्वांस इति सप्रश्रयमभ्यर्थयते—

१–२–०६
जयपुरम्

विदुषामनुचरः
केदारनाथः।

---

1 "Chaitanya Chandrodaya Nâtaka, composed in 1543."
—Theodor Aufrecht's Cat. Cat. Part I, P. 86.

## चैतन्यचन्द्रोदयनाटकस्याङ्कानामनुक्रमणिका ।

# काव्यमाला।

## कविकर्णपूरविरचितं
## चैतन्यचन्द्रोदयम्।

प्रथमोऽङ्कः।

निधिषु कुमुदपद्मशङ्खमुख्येष्वरुचिकरो नवभक्तिचन्द्रकान्तैः।
विरचितकलिकोकशोकशङ्कुर्विषयतमांसि हिनस्तु गौरचन्द्रः॥ १॥

(नान्द्यन्ते)

सूत्रधारः—अलमतिप्रसङ्गेन। भो भोः, अद्याहं रत्नाकरवेलाकन्दलितदलितकज्जलोज्ज्वलन्महानीलमणिकन्दलस्य नीलगिरिदरीदरीदृश्यमानघनदलमालतमालतरुकदम्बस्य गभीरतरकोटरमहावटवटनिकटप्रकटप्रमदमातङ्गस्य भगवतः श्रीपुरुषोत्तमस्य गुण्डिचायात्रायां सकलदिग्विदिग्विहारिहारिनरनिकरमुखरमुखरममाणजयध्वनिध्वनितजगदण्डभाण्डकुहरे

---

१. नवीनभक्तिमणिविशेषैरित्यर्थः. २. वितीर्णकल्यात्मचक्रवाकशोकशङ्कुरित्यर्थः. यथा विधूदये चक्रवाकस्य चक्रवाकीविरहाच्छोको भवति, तथैव गौरचन्द्रनवभक्तितोऽधर्मनाशात्कलेर्यमराजस्यापि शोक इति भावः. ३. स्रक्चन्दनकान्ताद्युपभोगरूपसंसारवासनात्मतिमिराणीत्यर्थः. ४. रत्नाकरस्य वार्धेर्वेलायां कन्दलितस्तथा दलितं मर्दितं यत्कज्जलं तद्वदुज्ज्वलन्यो महानीलमणिस्तस्य कन्दलो नूत्नाङ्कुरस्तथाविधस्य. ५. नीलगिरेर्नीलपर्वतस्य दर्यां गुहायां दरीदृश्यमानः पुनः पुनरतिशयेन दृश्यमानस्तथा घनाः सान्द्रा दलमालाः पत्रपल्लवो यस्य तादृग् यस्तमालतरुस्तस्य कदम्बस्य कोरकस्य. ६. गभीरतरं कोटरं यस्य तादृशस्य महतोऽवटवटस्य अक्षयवटवृक्षस्य निकटे उत्कृष्टः प्रमदो यो मातङ्गस्तथाविधस्य. ७. रथयात्रायामित्यर्थः. ८. सकलाश्च ते दिग्विदिग्विहारिणोऽनेकदेशस्था हारिणो मनोहारिणश्च नरास्तेषां निकरैर्मुखरेषु वाचालतां गतेषु मुखेषु रममाणैः मुखपूर्वं ब्रुवद्भिः 'जय जगदीश' इत्यादि जयध्वनिभिर्ध्वनितं व्याप्तं यज्जगदण्डभाण्डकुहरं यस्मिंस्तथाविधे.

[1]प्रमोदमोदमानमानसरसाविभक्तभक्तजनजनितभगवत्कीर्तनकुतूहलहलहला-स्वानस्वानन्दितदिग्वधूनिकरे [2]सविमर्दमर्दलसाहचर्यलम्पटपटहमहापणपणव-स्वनस्वनल्पढक्काढक्कारगभीरभेरीभाङ्कृतिदुन्दुभिदुङ्कारकारणान्यशब्दाग्रह-निरवधिबधिरायमाणजननिकरे क्वचन समये सेवाधिकारितयाऽरतया समुपसीदता सीदता च [3]भगवत्कृष्णचैतन्यतन्यमानतिरोभावभावभावि-तमानसारुपापरुपापद्दशावशादशात[4]शातवैमुख्येन मुख्येन हेतुना त-थाविधेऽपि परमानन्दे मानं देयमपि न कुर्वताऽवताऽवनिभृताऽनिभृताभि-लाषेण गजपतिना प्रतापरुद्रेणादिष्टोऽस्मि । यथा—'हंहो चारणाचार्य,

सोऽयं नीलगिरीश्वरः स विभवो यात्रा च सा गुण्डिचा
ते ते दिग्विदिगागताः सुकृतिनस्तास्ता दिदृक्षार्तयः ।
आरामाश्च त एव नन्दनवनश्रीणां तिरस्कारिणः
सर्वाण्येव महाप्रभुं बत विना शून्यानि मन्यामहे ॥ २ ॥

तदिदानीं प्रेमसौभगवतो भगवतो यतीन्द्रस्य तस्यैव गुणपरिमलोद्गार-सारेण [5]रसारेण केनापि प्रयोगेण शुभवता भवताहमानन्दनीयः । यतः ।

प्रियस्य साक्षादविलोकजन्यां बाधां विसोढुं नहि कोऽप्युपायः ।
सुहृद्भिरुक्तादथवाभिनीतादृते तदीयाद्गुणसंप्रयोगात् ॥ ३ ॥'

इति । तदवश्यमत्र यतनीयम् । चित्रं चैतत् ।

---

१. प्रमोदेन मोदमानं मानसं येषां तादृशास्तथा रसेषु गौरचन्द्रभक्तिरसेषु अविभक्ता अविचारितभागा ये भक्तजनास्तैर्जनितं यद्भगवत्कीर्तनं तत्र कुतूहलेन यो हलहलास्वानः कोलाहलरवस्तेन स्वानन्दितो दिशो वध्व इव तासां निकरो यत्र तथाभूते. २. विमर्देन सह वर्तमाना ये मर्दला वादित्रभेदास्तेषां साहचर्ये लम्पटा ये पटहा वाद्यविशेषास्तथा महान् पणो येषां तादृशा ये पणवा वाद्यभेदास्तेषां स्वनैः शब्दैस्तथा अनल्पानां बहीनां ढक्कानां ढक्कारैः शब्दविशेषैस्तथा गभीराभिर्घनाभिर्भेरीभाङ्कृतिभी रवविशेषैस्तथा दुन्दुभीनां दुङ्कारकारणैरन्येषां शब्दानामग्रहेण निरवधि बधिरायमाणा जननिकरा यत्र तथाभूते. ३. भग ऐश्वर्यादिषट्कं विद्यते अस्य स चासौ कृष्णचैतन्यस्तेन तन्यमानो यस्तिरोभावः स एव भावस्तस्य भा कान्तिस्तया भावितं मानसारुर्हृदयमर्मपीडा येन तथाभूतेन, ४. नास्ति शातं सुखं यस्मात्तादृशस्य शातस्य वैमुख्येनेत्यर्थः. ५. रसवतेत्यर्थः.

निर्धूमोऽप्यनुमीयते प्रतिदिशं यस्य प्रतापानलः
साधूनां सुखदो विपक्षशलभव्यूहस्य दाहोद्धुरः ।
प्रागेव स्फुटने विशङ्कितधिया यस्योष्मणां प्रक्रमैः
श्रीशेनावरणैरकारि बहुभिर्ब्रह्माण्डलेपो बहिः ॥ ४ ॥

सोऽयं मूर्तिमानिव निवहीभूतः पराक्रमः क्रमसमुपचीयमानभगवद्भावस्वभावस्वयमाविर्भूतशान्तिरसावगाहनिर्धूतरजस्तमस्तयाऽस्तयाऽविद्यया शम इव शरीरी परेषामपि मनसि न सिध्यन्तीं विषयवासनां करोति । तदधुना धुनानः संदेहं देहं च कृतार्थयन्नयमहं श्रीनाथेनानुगृहीतेन तस्यैव भगवतोऽवतो निजकरुणां श्रीकृष्णचैतन्यस्य प्रियपार्षदस्य **शिवानन्दसे**नस्य तनुजेन निर्मितं **परमानन्ददासकविना** विनाशितहृत्कषायतिमिरं **श्रीचैतन्यचन्द्रोदयं**नाम नाटकमभिनीय समीहितहितमस्य नृपतेः करिष्यामि । (अग्रतोऽवलोक्य ।) भो भोः, इत इतः ।

(प्रविश्य)

**पारिपार्श्विकः**—भाव, आश्चर्यमाश्चर्यम् ।

**सूत्रधारः**—मारिष, किं तत् ।

**पारिपार्श्विकः**—एतावत्यपि भगवतः श्रीनीलाचलचलदानन्दकन्दस्य स्यन्दनयात्रापरमानन्दे[1] कतिपये सुखोपरमे परमविमनस्कास्तमस्काण्डभाण्डमिव ब्रह्माण्डं मन्यमाना विलपन्तः सन्ति । तथा हि ।

अहो सोऽयं नीलाचलतिलकयात्राविधिरियं
नवोद्यानश्रेणी रथविजयवर्त्मापि तदिदम् ।
दहत्युच्चैः पित्तज्वर इव दृशौ कृन्तति मनः
खलानां वाणीव व्यथयति तनुं हृद्व्रण इव ॥ ५ ॥

तत्कथय किमत्र रहस्यम् ।

**सूत्रधारः**—मारिष, धन्योऽसि यस्य तेऽस्य ते किलानयोर्नयनयोर्नयसाफल्यकारिणः परमभागवता अद्य गोचरीभूता भूतारणकृतः ।

**पारिपार्श्विकः**—भाव, केऽमी ।

**सूत्रधारः**—श्रीकृष्णचैतन्यपार्षदाः ।

---

१. 'गमनयात्रा' इति पाठः.

**पारिपार्श्विकः**—कोऽसौ **चैतन्यगोस्वामी** ।

**सूत्रधारः**—मारिष, अद्यापि जननीजठरपिठरपिहित एवासि, यदिदं महाप्रभोस्तस्य नाम नाम च न श्रुतम् । श्रूयताम् ।

आश्चर्यं यस्य कन्दो यतिमुकुटमणिर्माधवाख्यो मुनीन्द्रः
श्रीलाद्वैतः प्ररोहस्त्रिभुवनविदितः स्कन्ध एवावधूतः ।
श्रीमद्वक्रेश्वराद्या रसमयवपुषः स्कन्धशाखास्वरूपो
विस्तारो भक्तियोगः कुसुममथ फलं प्रेम निष्कैतवं यत् ॥ ६ ॥

अपि च ।

ब्रह्मानन्दं च भित्त्वा विलसति शिखरं यस्य यत्रात्तनीडं
राधाकृष्णाख्यलीलामयखगमिथुनं भिन्नभावेन हीनम् ।
यस्य च्छाया भवाध्वश्रमशमनकरी भक्तसंकल्पसिद्धे-
र्हेतुश्चैतन्यकल्पद्रुम इव भुवने कश्चन प्रादुरासीत् ॥ ७ ॥

**पारिपार्श्विकः**—भाव, किंप्रयोजनो जनोहदूरोऽयमवतारः ।

**सूत्रधारः**—मारिष, अवधेहि वधे हि मनसो निर्विशेषेऽशेषे परे ब्रह्मणि लय एव परः पुरुषार्थः । तत्साधनं धनं हि केवलमद्वैतभावनेति सर्वशास्त्रप्रतिपाद्यत्वेनाद्यत्वेनापि मन्वानानां विदुषां स्वमताग्रहग्रहगृहीतानामनाकलितं तत्र तत्रैव शास्त्रेषु गूढतयोढतयोत्तमत्वेन स्थितमपि सच्चिदानन्दघनविग्रहो नित्यालीलोऽखिलसौभगवान्भगवाञ्श्रीकृष्ण एव सविशेषं ब्रह्मेति तत्त्वं तस्योपासनं सनन्दनाद्युपगीतमविगीतमविकलः पुरुषार्थः । तस्य साधनं नाम नामसंकीर्तनप्रधानं विविधभक्तियोगमाविर्भावयितुं भगवांश्चैतन्यरूपी चैतन्यरूपीभगवन्नाविरासीत् ।

**पारिपार्श्विकः**—भाव, किं तेनेह तेने हरिणा स्वाभिमतमतव्यञ्जको ग्रन्थः ।

**सूत्रधारः**—यद्यपि को न वेद वेदकर्तृत्वं भगवतस्तथापि खल्वन्तर्यामी यामीहते प्रेरणां न खलु सा बाह्योपदेशतो देशतो वा कालतश्च परिच्छिन्ना भवितुमर्हति ।

**पारिपार्श्विकः**—भाव, तर्हि कथं तत्रैवोदारमते रमते न सर्वः ।

सूत्रधारः—विविधवासनासनाथो हि लोको लोकोत्तरे वर्त्मनि कथं सर्व एव प्रवर्तताम् । वासनाबद्धा श्रद्धाश्रयते हि भेदकतां मतेरिति ।

पारिपार्श्विकः—भाव, भक्तियोगो योऽगोचरः शास्त्रकृतां स च सचमत्कारं ज्ञानमेव जनयति । तस्य ब्रह्मकैवल्यं वल्यं फलमिति को भेदः ।

सूत्रधारः—मारिष,

'एवंव्रतः स्वप्रियनामकीर्त्या जातानुरागो द्रुतचित्त उच्चैः ।'

इत्यादिना भगवन्नामसंकीर्तनादिरूपस्य भक्तियोगस्य योऽगस्य रतिजनकभावः स खलु पार्षदभावं भावं भावमवतिष्ठते । तथा च ।

'तैर्दर्शनीयावयवैः'

इत्यारभ्य

'पश्यन्ति ते मे रुचिराण्यम्ब सन्तः प्रसन्नहासारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ॥'

इति तद्रूपतैव तेषां मोक्षो न तु कैवल्यम् । अत एव त एवमूचिरे कपिलपादाः—

'भक्तिः सिद्धेर्गरीयसी'

इति । अतः खलु कलौ नाम नामसंकीर्तनमेव पुरुषार्थसाधकतातिरस्कारि पुरस्कारि रत्याख्यभावस्य ।

पारिपार्श्विकः—भाव, भावकं वचनमिदमतीव विस्मापकम्, यतो भगवन्नाम मुक्तिमेव जनयतीति शास्त्रं तदन्यथा चेत्, उच्यते । वस्तुतस्तु

'नारायणेति म्रियमाण इयाय मुक्तिम्'

इति श्रूयते ।

सूत्रधारः—(विहस्य ।) मुक्तिशब्दोऽत्र पार्षदस्वरूपपरः । यतस्तत्रैव

'सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ।'

इति । इदमेव श्रीकृष्णचैतन्यमतमन्यमतमपास्तं करोति । अनुतिष्ठन्ति चैतत्सुकृतिनः कृतिनः । अतस्तदवतारेण कलिरप्ययं कृतार्थः ।

पारिपार्श्विकः—कथमेतत् ।

कलौ न राजञ्जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं यक्षन्ति पाखण्डविभिन्नचेतसः ॥ ८ ॥

इति निन्दाश्रवणात् ।

**सूत्रधारः**—तत्तु श्रीकृष्णावतारतः पूर्वपूर्वकलिपरम् । अन्यथा

'कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ।
अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ॥
कलौ खलु भविष्यन्ति नारायणपरायणाः ।
कृतादिषु प्रजा राजन्कलाविच्छन्ति संभवम् ॥'

ध्यादीनि भाविचैतन्यावतारपराणि वचनानि विरुध्येरन् ।

**गरिपार्श्विकः**—कथमेतान्न बाधते कलिः ।

**सूत्र**ारः—

कृष्ण दिवसं क्षयमाप्नोति यः सदा ।
दोषाकरो बाध ते स वै विष्णुपदाश्रितान् ॥ ९ ॥

ध्ये ।)
कस्त्वं भोः, दोषाकरत्वेन मा ष्पसयन्सुधाकरमुपस्थापयसि ।

**सूत्रधारः**—(निपुणं निभाल्य ।) यथाप्रस्तावमयममर्षोत्कर्षहृद-

योऽदयोदयो ह्यधर्मेण प्रियसखेन समग्नि,

(इति निष्क्रावाभिवर्तते । तदितोऽपसरावः ।

इति प्रस्ताव)

---

(ततः प्रविशत्यधर्मेणोपास्यम

**कलिः**—सखे अधर्म, सत्यमेवाह चार लिः ।)

र्मः ।

**अधर्मः**—किं तत् ।

(कलिः 'कृष्णपक्षे' (१।९) इत्यादि

**अधर्मः**—सखे युगराज, 'दोषाकरः' (१।ठति ।)

शृणु ति भवन्तमेवाक्षिप्तवा-

नयमधमः । आः पाप कुशील कुशीलव,

शौचाचारतपःक्षमाशमदमैः सार्धं विवेक

सामन्तैरपि येन धर्मनृपतिर्निर्मूलमुन्

: ।

ये दृष्ट्वैव पुनन्ति तेऽपि सहसैवान्धीकृतास्तत्प्रिया
येनैकेन मया स यस्य वशगः सोऽयं कलिर्निन्द्यते ॥ १० ॥

तिष्ठ रे पाप, तिष्ठ ।

यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ।
धर्माभावे कुतः कृष्णः पक्षे यस्य कलेः क्षयः ॥ ११ ॥

**कलिः**—सखे, नायमाक्षिप्यताम् । अवधारय । यतः ।

गतः स कालो मम सांप्रतं सखे हतप्रभावोऽस्मि कुमारकादतः ।
महौषधेरङ्कुरनिर्गमादिव क्षतप्रभस्तक्षकनागपुंगवः ॥ १२ ॥

**अधर्मः**—युगराज, कोऽसौ कुमारकः, किं कुत्सितो मारकः, किं कोः पृथिव्या वा मारकः ।

**कलिः**—नोभयम् । नोभयं नो भयं कर्तुमीष्टे, किंतु नवद्वीपे जगन्नाथनाम्नो मिश्रपुरंदराज्जातः शच्यां कुमारोऽयं मम मर्माणि कृन्तति ।

**अधर्मः**—(विहस्य ।) हंहो युगराज,

यस्योच्चैर्भुजदण्डचण्डिममहामार्तण्डतेजोभया-
न्मूको घूक इवाद्रिकन्दरगतः पादैकशेषो वृषः ।
स त्वं मद्विधभृत्यसेवितपदो भूदेवबालादतो
भीतिं विन्दसि हन्त कोऽयमतुलश्चित्तस्य ते विभ्रमः ॥ १३ ॥

**कलिः**—सखे, नायं केवलो भूदेवबालः । अपि तु बालदेवदेवः । तथा हि ।

हरिहरि हरिभक्तियोगशिक्षासरसमना जगदेव निष्पुणानः ।
हरिरिह कनकाब्जकान्तकान्तिर्द्विजभवनेऽवततार बाललीलः ॥ १४ ॥

तथा च ।

जायमानः पूर्णिमायामुपरागच्छलेन यः ।
आह्वयामास युगपद्धरेर्नाम जगज्जनान् ॥ १५ ॥

---

१.-२. 'कुत्सितो मारकः, कोः पृथिव्या वा मारकः' इति चोभयं नेत्यर्थः. ३. 'हरिहरि' इति खेदसूचकमव्ययम्.

**अधर्मः**—अयमपि ते भ्रमः । यदिदं काकतालीयन्यायेनोपपन्नमन्यथा कल्पयसि । शृणु भोः, शृणु ।

महाप्रभावाः सुमहासहायाः क यूयमुच्चैश्चिरबद्धमूलाः ।
कायं कडम्बो द्विजवंशजातस्ततोऽपि भीः कोऽयमहो भ्रमस्ते ॥ १६ ॥

**कलिः**—सखे, यथार्थमाकलय ।

स्वयंप्रकाशाः किल कालदेशवयोऽन्वयादौ नहि सव्यपेक्षाः ।
उद्यातमात्रः खलु बालसूर्यो गाढं तमस्काण्डमपाकरोति ॥ १७ ॥

नाप्ययमसहायः । यतः खलु स्वावतारात्पूर्वमेवायमवनितले प्रियपार्षदनिवहानाविर्भावयामास । तथा हि ।

अद्वैताचार्यवर्यो भगवदनवमं[1] शांभवं धाम साक्षा-
न्नित्यानन्दावधूतो मह इह महितं हन्त सांकर्षणं यः ।
श्रीकान्तश्रीपतिभ्यामपि सह विजयी श्रीलरामेण सार्धं
कोऽपि **श्रीवास**नामा द्विजकुलतिलको नारदीयं हि तेजः ॥ १८ ॥

अपि च ।

आचार्यरत्नहरिदासमुरारिगङ्गा-
दासादयः सह गदाधरपण्डिताद्याः ।
विद्यानिधिप्रभृतयोऽपि च वासुदेवा-
चार्यादयः सह मुकुन्दमुखास्तथान्ये ॥ १९ ॥

अपि च ।

श्रीवक्रेश्वरवान्नृसिंहसहितः शुक्लाम्बरेणायुतः
श्रीदामोदरशंकरौ च जगदानन्दं च मुख्यं दधत् ।
नानाभावविलासलास्यरसिकः प्रेमास्पदानां गणो
यद्बाल्यावधि बान्धवः स जगतीत्राणाय भूमिं गतः ॥ २० ॥

**अधर्मः**—युगराज, कथमयमीश्वर इति निरणायि ।

**कलिः**—सखे सकलजनान्तःकरणाकर्षित्वं हि भगवतोऽसाधारणं लिङ्गम् । आनन्दमयत्वात् । आनन्दमयो हि जीवानानन्दयितुमर्हति ।

---

१. भगवतः श्रीनारायणादनवमं समानमित्यर्थः.

यथा प्रचुरधनः परमपि धनिनं करोति। एतावत्त्वं हि परमैश्वर्यं लिङ्गमस्य यद्बाल एव सकलजनचित्तचमत्कारकारकः। तथा हि।

शिवशिव[1] शिशुतायामेव गाम्भीर्यधैर्य-
स्मृतिमतिरतिविद्यामाधुरीस्निग्धताद्याः।
निखिलजनविशेषाकर्षिणो ये गुणास्तै-
रिह न विदधतां के विष्णुरित्येव बुद्धिम्॥ २१॥

अधर्मः—अनैकान्तिकमिदम्। प्रकृष्ट एव कश्चिज्जीवो भवतु।

कलिः—मैवम्।

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम्॥ २२॥

इति भगवतः सामान्योक्तेस्तथाविधायुतगुणवत्तया भगवत्तैवास्य सिद्धेति वयमेव प्रमाणम्। यद्वयं जीवतो न बिभीमः।

अधर्मः—स किल कृतोद्वाह इति श्रूयते।

कलिः—अथ किम्।

अवतरति जगत्यामीश्वरे हन्त तस्या-
प्यवतरति हि शक्तिः काप्यसौ रूपिणी श्रीः।
अनुकृतनरलीलां तामुरीकृत्य नीत्वा
कतिपयदिनमन्तर्धापयामास देवः॥ २३॥

तथा च तस्या मानुषीभावः—

'देवत्वे देवरूपा सा मानुषत्वे च मानुषी।' इति।

किं च।

भुवोंऽशरूपामपरां च विष्णुप्रियेति वित्तां परिणीय कान्ताम्।
वैराग्यशिक्षां प्रकटीकरिष्यन्हास्यत्यथैनां स नवां नवीनः॥ २४॥

अपि च।

अस्याग्रजस्त्वकृतदारपरिग्रहः स-
न्संकर्षणः स भगवान्भुवि विश्वरूपः।

---

१. 'शिवशिव' इति खेदसूचकमव्ययम्.

स्वीयं महः किल पुरीश्वरमापयित्वा
पूर्वं परिव्रजित एव तिरोबभूव ॥ २५ ॥

**अधर्मः**—(क्षणं विचिन्त्य । स्वगतम् ।) अहो, कष्टमिव प्रतिभाति । प्रतिभातिरेकेणैवाहमन्यथा कुर्वन्नस्मि । किंतु ।

ग्लपयति हृदयं मे स्रंसयत्यङ्गमङ्गं
विधुरयति विधेयं सर्वमेवेन्द्रियाणाम् ।
स्मृतिमहह लुनीते हन्त धैर्यं धुनीते
न हि महदभिधानादस्ति मे कष्टमन्यत् ॥ २६ ॥

**कलिः**—सखे, अनुभूतमिदानीमनुभूयताम् ।

**अधर्मः**—सखे, अस्त्युपायोऽपायोज्झितः कश्चिदस्य पराभवाय, भं[1]वाय चास्माकम् ।

**कलिः**—कोऽसौ ।

**अधर्मः**—

कामादयो ये षडमी अमात्यास्तेषामशक्यं नहि किंचिदास्ते ।
येषामखण्डाद्भुजदण्डदर्पादेकातपत्रं तव विश्वमेव ॥ २७ ॥

संप्रति च ते दिग्विजयतः षडेव निवृत्ताः सन्ति । एकैके खलु एकैकां दिशं विजित्य निष्कण्टकमेव जगत्कृत्वा स्वामिनस्तव पादमूलमधुना धुनानाः संदेहं समागमिष्यन्ति । तानेवास्य पराभवाय सर्वानेव युगपन्नियोजयिष्यामः । तथा हि । तेषां पराक्रमं वर्णयामः ।

यद्दोर्दर्पात्स्वयमुपगतः पद्मयोनिः स्वपुत्री-
मात्मारामोऽपि च पशुपतिर्मोहिनीं धावति स्म ।
सोऽयं कामस्त्रिभुवनजये यस्य विख्यातिरुच्चैः
स्त्रीणां [2]क्रीडोतव इव परे तत्र केऽमी वराकाः ॥ २८ ॥

**कलिः**—सखे, अज्ञोऽसि भगवत्तायाः ।

नारायणस्यैष पुरा पराभवे गतः स्वयं तेन पराजितोऽभवत् ।
न वै जगन्मोहनमोहनं हरिं देहंभृतो मोहयितुं तमीशते ॥ २९ ॥

---

१. कल्याणायेत्यर्थः. २ क्रीडाबिडालाः.

तथापि ते ममैव नियुक्ताः सन्ति । प्रतिज्ञातं च तैः सति शिशुतापगमेऽस्माभिरयं पराभवनीय इति, तदप्यसंभाव्यमेव । यतः ।

आरम्भ एव वयसोऽभिनवस्य नव्यां
　लक्ष्मीमिव द्युतिमतीं स विहाय भार्याम् ।
संपालयन्निजनिदेशमथो गयायां
　यातश्चकार जनकस्य परेतकार्यम् ॥ ३० ॥

अपि च ।

तत्रैव दैववशतः समुपेयिवांसं
　न्यासीन्द्रमीश्वरपुरीमुररीचकार ।
शिक्षागुरुर्गुरुतया दश वर्णविद्या-
　मासाद्य माधवपुरीन्द्रवशां वशीशः ॥ ३१ ॥

अपि च ।

आगत्य स स्वभवनं प्रियसंप्रदायैः
　श्रीवास-राम-हरिदासमुखैः परीतः ।
गायन्नटन्नभिनयन्विरुदन्नमन्द-
　मानन्दसिन्धुषु निमज्जयति त्रिलोकीम् ॥ ३२ ॥

कथमत्र कामवराकोऽवसरमुपैतु ।

**अधर्मः**—सखे, मैवं वादीः ।

उग्रैरुग्रैस्तपोभिः शमदमनियमैर्धारणाध्यानयोगै-
　र्युक्ताश्चापारमेष्ठ्यं त्रिभुवनविभवे छर्दितान्नावबोधाः ।
कन्दर्पादीनमित्रानपि सहजतया दुर्जयानेव जित्वा
　येन स्पृष्टा निपेतुः कथय कथमसौ केन कोपो विजेयः ॥ ३३ ॥

**कलिः**—सखे, कोपो वराकस्तस्य किं करोतु । तथा हि । यः खलु विविधविधर्मनर्मसचिवयोः सप्रपञ्चपञ्चमहापापपापच्यमानमानसयोः सकललोकोपप्लवमात्रमात्रयोः परमलुण्ठाकयोः कयोश्चिद्ब्राह्मणचेलयोः कुचे-

---

१. द्विजबालकश्चैतन्यदेवः. २. जगन्नाथमिश्रस्य. ३. कामः.

लयोः कुकर्मकर्मठयोः सोदर्ययोः कदर्ययोः कपटपटहाकारयोर्जगन्नाथमाधवाभिधानयोरनयोरहरहरतीव वर्धमानमानसमलयोः सानुग्रहग्रहमात्मनैवाहूय पुरतः समानीतयोः किल्बिषविषलोभवद्भ्यां भवद्भ्यां यद्यदेनो व्यरचि, तदखिलमेव मेऽवधानपूर्वकं ददतमिति गदितयोः कथं कथमपि विस्मयचमत्कारकारणेन क्षणं स्थगितयोरनन्तरं ददावेति निगदतोः करतो जलं गृहीत्वा सद्य एव देदीप्यमानीक्रियमाणयोरुदित्वरत्वरमाणविपुलपुलककञ्चुकयोरानन्दनन्ददीक्षणसलिलयोः कृष्णकृष्णेति गद्गदगदनरुद्धकण्ठयोश्चिरसमयसमयमानमनोनिर्मलतया चिरसमुपपन्नभक्तियोगयोगतो गतोद्दामकामादिदोषयोः परमभागवतानां पदवीमारूढयोस्तादृशेनानन्दविकारेण पश्यतः श्यतः संदेहं सकलानेव जनांश्चित्रार्पितानिवानिवारितमेवाकार्षीत्। तस्य खलु सकललाघवकारिणः कटाक्षपातमात्रेणैव परहृदयादपि कामादिषड्विपक्षपक्षच्छिदो भगवतः क्रोधवशीकारः किं चित्रम्।

(नेपथ्ये आनन्दकोलाहलः।)

**कलिः**—(श्रुतिमभिनीय।) सखे, श्रुतमिदम्। अद्य खलु **श्रीवास**बासान्तरे यदयमानन्दकुतूहलहलहलारावः श्रूयते, तेनानुमितममितमहमहनीयं तस्यैव किमपि चेतश्चमत्कारकारि चरितमुन्मीलति।

(पुनर्नेपथ्ये [1]उलूलुध्वनिसहचरो विविधवादित्रध्वनिः।)

**कलिः**—(निपुणं निभाल्य।) अये, सत्यमेवानुमितमस्मादृशादृश्यमानमिवैतत्। पश्य। भूसुरसुरसतरुणीगणमुखमुखरितमङ्गलोलुलुध्वनिसहचरचैरमपरितोपसमुच्चरज्जयजयनिस्वनानुवादिवादित्रसमूहनिर्घोषप[2]रिपोषविशृङ्खलशङ्खघण्टारवैरवैयग्र्यतः श्रवणावटघटमानसुधारसासार इव कश्चन महोत्सवसमयोऽयमुन्मीलति। तदिदमवश्यमेव निपुणं निभालनीयम्। (इति तथा करोति।)

(पुनस्तत्रैव।)

रामाद्यर्घ्यादीन्परमुपहर श्रीपते भव्यनव्या-
न्कुम्भानष्टोत्तरशतमुपासादय त्वं जवेन।

---

१. उत्सवकालिके गौडादिदेशप्रसिद्धे स्त्रीभिः क्रियमाणे ध्वनिविशेषे. २ 'परमपरितोष–' इति पाठः. ३. 'परितोष–' इति पाठः.

श्रीकान्त त्वं प्रतिदिशवधूवर्गमन्याश्च धन्या
भूदेवस्त्रीरमरसरितो नीरमभ्यानयन्तु ॥ ३४ ॥

कलिः—सखे, सम्यगालक्षि मया । यदयं श्रीवासः सहोदराना-दिशति, तथा मन्ये तस्यैव विश्वंभरदेवस्य प्रकटघटमाननिजावेशविकस्वर-परमप्रभावस्य महाभिषेकमहोत्सवसमारम्भः समुज्जृम्भते ।

अधर्मः—यद्ययं स्वयं स्वयमित ईश्वर एव, तदा कथमाधुनिक आ-वेशः ।

कलिः—श्रूयताम् ।

नित्यो यद्यप्यहह बलवानीश्वरस्येशभावः
स्वाधीनत्वात्तदपि न स तं सर्वदैव व्यनक्ति ।
हन्तादत्ते कुतुकवशतो लौकिकीमेव चेष्टां
लीलामाहुः परममुरसां तस्य तामेव तज्ज्ञाः ॥ ३५ ॥

(पुनर्नेपथ्याभिमुखमवलोक्य) सखे, पश्य पश्य । तत्कालोदितदिनकर-करनिकरनिर्भरपरिरब्धजाम्बूनदशिखरिशिखरमरीचिवीचिनिचयरुचिमञ्ज-रीभिरिलावृतवर्षस्यैकखण्डमिव भूसुरवरश्रीवासवासमखिलजनलोचनगो-चरीकुर्वन्निव निवहीभूतानन्दमहोन्मदिष्णुरिव युगपदुदित्वरसमुद्दामवि-शुद्दामपुञ्ज इव भगवद्गेहमनुप्रविश्य विशालशालग्रामादिपर्यङ्कमधिरुह्य शालग्रामादिकमेकतोऽवक्षिप्य समुपविष्टः सकलैरेव ससंभ्रमभ्रमणमितस्ततो धावद्भिः सविपुलपुलकाश्रुभिरानयद्भिः पूर्वोद्दिष्टानि पूजोपकरणानि करणा-नियतपाटवैरिव वैरिवर्यरूपविषयवासनावासनाशविशदान्तरैरभितोऽभितः परिवव्रे ।

(पुनर्नेपथ्ये ।)

कुरुष्व सुरभीरपस्त्वमिह राम संशोधिता
मुकुन्द रचय स्वयं त्वमभिषेकसामग्रिकाम् ।
गदाधर विधत्स्व भो वसनमाल्यभूषादिकं
मयायमभिषेक्ष्यते हरिरिहैव खट्वोपरि ॥ ३६ ॥

**कलिः**—(नेपथ्याभिमुखं परितोऽवलोक्य ।) सखे, पश्य पश्य ।

यान्त्यायान्ति च हन्त मङ्गलघटव्यग्राग्रहस्ताः स्त्रियो
या एताः परितः पुरात्सुरधुनीं तत्कूलमूलात्पुरम् ।
तासां वाचि तदीहितं नयनयोरस्रं तनौ वेपथु-
र्धम्मिल्ले श्लथता कपोलफलके रोमाञ्च इत्यद्भुतम् ॥ ३७ ॥

**अधर्मः**—'धम्मिल्ले श्लथता तदेतदखिलं कामस्य विस्फूर्जितम्' इत्येव भण्यताम् । यतः ।

यत्र यत्र हरिणीदृशां क्रमस्तत्र तत्र मदनस्य विक्रमः ।
स्वप्रकर्षजननीं विना चमूं केवलो जयति किं चमूपतिः ॥ ३८ ॥

**कलिः**—नाप्येतत् ।

भावेनोपहतं चेतो ह्येषां क्षोभकारकम् ।
निर्भावानां पुनस्तेषामाकारो नापराध्यति ॥ ३९ ॥

(पुनर्नेपथ्ये तुमुलनिर्घोषपोषकः पुरुषसूक्तपारायणसुरसः कलकलः ।)

**कलिः**—(निर्वर्ण्य ।) अहो, अत्यद्भुतम् ।

एते ब्रह्मकमण्डलोरिव घटान्निःस्यन्दमानैर्मुहुः
स्वर्गङ्गाजलनिर्झरैरविकलक्लिन्नात्सुमेरोरिव ।
गौराङ्गस्य शरीरतो निपततां भूमण्डलोल्लासिनां
निस्यन्दाः सुमहाभिषेकपयसां सस्रुश्चतस्रो दिशः ॥ ४० ॥

अपि च । अभिषिक्तस्य निःसारितसारितराभिषेककीलालस्य लालस्यमानवसनपरिधापनपणनशोभमानस्य मानस्य परितोषविशेषेणाशेषेणानुलिप्तस्य भक्तजनैः कैश्चन कृतालंकरणस्य करणास्पदेन कैरपि धावितचरणकमलस्य ज्वलनधौतकलधौतकलया नीराजितराजितगौरमहसो महसोऽसूयमानमहिम्नः श्रीविश्वंभरस्य भरास्पदेन प्रेम्णां सर्वैरेव पादपद्मोपकण्ठे यथावैभवं वैभवं पुरस्कृत्याद्वैतं द्वैतं दूरयद्भिः कनकमणिवसनादीन्युपढौक्यन्ते ।

**अधर्मः**—सखे, अयमवसरो लोभस्य । यतः ।

धैर्यध्वंसी परिणतिसुखद्वेषणो ह्रीविरोधी
जेतुं शक्यो भवति नितरां हन्त केनापि लोभः ।

क्षीराम्भोधेर्मथनजनितं रत्नभूतस्य रत्नं
देवो विष्णुः किमपि चकमे कौस्तुभं न श्रियं च ॥ ४१ ॥

कलिः—नायं तथा। (इति निभाल्य।) पश्य पश्य। एष खलु

न भाषते नेक्षते च न शृणोति च किंचन।
स्वानन्दस्तिमितः किंतु तेजसा परमेधते ॥ ४२ ॥

अधर्मः—सखे, इयमपि मदस्य रीतिः।

मूकीकरोत्यलममूकमहो अनन्ध-
मन्धीकरोत्यबधिरं बधिरीकरोति।
योऽयं बली सुमनसं विमनीकरोति
स श्रीमदो वद न कस्य महोपहत्यै ॥ ४३ ॥

तदलमत्र चिन्तया। एकस्यावसरे सर्वेषामेवावसरोऽनुमेयः—'एकयोग-निर्दिष्टानाम्' इत्यादि। तेन

अन्योत्कर्षासहत्वान्मनसि मलिनता क्रौर्यकापट्यकारी
यत्रोत्पद्येत तं हि प्रदहति सहसा कोटराग्निर्यथागम्।
येनाक्रान्तान्तराणां खल इति बलते विश्वविक्षोभिकाख्या
सोऽयं मात्सर्यनामा तव सचिववरो वर्तते गूढमत्र ॥ ४४ ॥

(पुनर्नेपथ्ये।)

हन्त भो अद्वैत,

अष्टादशैव यामाः क्षण इव नामाभवन्यस्य।
तस्मिन्नानन्दमये किमुपचरामो वयं क्षुद्राः ॥ ४५ ॥

तदधुना सर्व एव तथा क्षुभ्यम्, यथायं सहजमपि सान्द्रमानन्दं प्रतनूकृत्य भक्तवात्सल्याद्बहिर्वृत्तिमालम्बते।

कलिः—सखे, श्रुतं श्रुतम्। भक्ता हि केवलमैश्वर्यं न सहन्ते, यदेवं श्रीवासो निगदति।

अधर्मः—श्रुतम्। किंतु एभिरिवास्मान्तर्वर्ती मदः प्रख्याप्यते सम-नन्तरं मोहश्च। तथा हि।

आनन्दः सहजो भवेद्यदि तदा नासौ विहातुं क्षम-
स्तेनान्तर्मदमेदुरोऽतिकपटाद्विश्वं तृणं मन्यते।
मोहश्चेत्स्वजनेषु नास्य किमहो तेषां वचो गृह्यते

**कलिः**—वात्सल्यात्।

**अधर्मः**—

क्षुद्रे मोह इतीतरत्र स जनैर्वात्सल्यमित्युच्यते॥ ४६॥

**कलिः**—अज्ञजीवाश्रयोऽयं विचारः क्षुद्राक्षुद्रत्वस्य जीवगतत्वादिति। (पुनर्नेपथ्याभिमुखमवलोक्य।) अहो, कथमकस्मादेव।

अद्वैतप्रमुखाः पतन्ति युगपत्सर्वे क्षितौ दण्डव-
च्छ्रीवासादिचतुःसहोदरवधूमुख्याः स्त्रियश्चाखिलाः।

आं ज्ञातम्।

व्याकोषाम्बुजमालिके इव कृपामाध्वीकनिस्यन्दिके
स्वानन्दोर्मिविनिद्रिते विकचयामासायमीशो दृशौ॥ ४७॥

(पुनश्चिरं निरूप्य।) अहो, अत्यद्भुतम्।

मच्चित्ता भवतेति वारिदघटागम्भीरधीरस्वरं
भाषित्वाङ्घ्रिसरोरुहे भगवतामीषां शिरःस्वर्पिते।
सास्रं सोत्कलिकं सवेपथु ससीत्कारं सरोमोद्गमं
सोल्लासं च सकौतुकं च यदमी आनन्दतन्द्रां ययुः॥ ४८॥

तदतः परमत्रैवागमिष्यन्ति सर्वे। तदेहि। स्थानान्तरं चिन्तयामः।

**अधर्मः**—सखे, ममावस्थानं क चिन्तनीयम्।

**कलिः**—चिन्तितमस्ति। श्रूयताम्।

विद्याशीलतपःकुलाश्रमयुजोऽप्येकान्तदान्ताश्च ये
निन्दन्त्यस्य विभोश्चरित्रमनघं तेषु त्वया स्थीयताम्।
त्वत्पत्नी तु मृषा बहिर्मुखमखेष्वास्तां तनूजश्च ते
दम्भः केवलशुष्ककर्मकुशलेष्वेतेन मा खिद्यताम्॥ ४९॥

**अधर्मः**—यथारुचितं ते।

(इति निष्क्रान्तौ।)

इति विष्कम्भकः।

(ततः प्रविशति पर्यङ्कारूढो गृहीतदिव्यवेषभूषः स्वानन्दसुमप्रबुद्ध इव भगवान्विश्वंभरः । परितो विभवश्चाद्वैतादयश्च दूरे कीर्तयन्तोऽन्ये च भागवताः ।)

**भगवान्**—अद्वैत,

गोलोकादवतारितोऽस्मि भवतैवाहं सुदुर्वारया
　　स्वप्रेमामृतवन्ययैव परया दैन्यादिनानन्यया ।

**अद्वैतः**—(अञ्जलिं बद्ध्वा ।)

कोऽहं क्षुद्रतरस्त्वयैव भगवँल्लीलावशेनात्मना
　　लोकानुग्रहसाग्रहेण धरणावात्मायमाविष्कृतः ॥ ५० ॥

कथमन्यथा ।

　　'तथा परमहंसानां मुनीनाममलात्मनाम् ।
　　भक्तियोगविधानार्थं कथं पश्येमहि स्त्रियः ॥'

इति कुन्त्युक्तदिशा तथाविधानां नीरसतया शुष्कहृदयानां मुनीनां हृदयसरसीकरणाय प्रकटितजगन्मङ्गलमङ्गलावतारेण स्वयं भगवता व्रजराजकुमारेण विरचितासु पुरुषार्थसार्थापार्थीकरणसमर्थश्रवणकीर्तनादिषु ब्रह्मानन्दादपि चमत्कारकारिणीषु गोकुल-मथुरा-द्वारवतीलीलासु

　　'भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
　　भक्तिः प्रवर्तिता दिष्ट्या मुनीनामपि दुर्लभा ॥'

इत्युद्धवोक्तदिशा सकलरसपारावारपारवर्तिगोकुलाद्यपरनामनि श्रीवृन्दावनधामनि निकामनिरतिशयानन्दभूमनि मूर्तिमदानन्दशक्तिभिः संततसंतन्यमानमानसरागपरभागभागधेयाभिराभीरभीरुभिः प्रवर्तितं तादृशप्रेमतत्त्वं तदानीं तत्रैव स्थितम् । संप्रति संप्रतिपद्यमानतदास्वादस्वादरगृहीतसमुचितग्रहस्य तव सौभगवतो भगवतो निरवधि तदेव मधुरतररसरहस्यपीयूषयूषमाहितगण्डूषमाचामतोऽङ्गुलिविवरविगलिता इव तत्कणाः क नामास्माभिरप्याचम्यन्ते ।

**भगवान्**—

श्रीवास स्मरसि विनिर्यतस्तवासूनारौत्सं यदिह [1]चपेटपाटवेन ।

---

१. वक्षे चपेटादानकौशलेन.

श्रीवासः—(स्मृतिमभिनीय।)

आं वेद्मि प्रभुवर मोचितोऽस्मि मृत्योः केनापि प्रसभमिति स्मृतिर्ममास्ते ५१

(सर्वे विस्मयं नाटयन्ति।)

भगवान्—श्रीवास, आमूलं कथय। सर्वे शृण्वन्तु।

श्रीवासः—भगवत आविर्भावात्पूर्वमाशैशवमाषोडशवर्षमयं जन्तुरतिदन्तुरतया द्विजगुर्वादिषु मन्तुमत्तया मत्तया मनोवृत्त्याऽगच्छदशान्तिदशाऽन्तिमकाष्ठाकाष्ठायमानहृदयोदयो वृथाकलहलहरीकुकथादिभिर्मदमेदुरदुरवस्थितधीः स्वप्नेऽपि न श्रुतकीर्तितभगवद्गुणः कदाचिदाचितपूर्वसुकृतसुकृतवशान्निद्रानिद्राविततायां संज्ञायां केनापि करुणात्मना स्वप्ने समुपदिष्ट इव जातोऽस्मि। यथा—'अरे [1]ब्राह्मणब्रुव, ब्रुवन्तु के त्वामुपदेशवाचं वा चञ्चलहृदयं तथापि ब्रूमहे। वर्षमेकं तेऽतः परमायुरतः परं वृथायुःक्षेपं मा कार्षीः' इति विभाविततायां विभावर्यां वर्यां तामुपदेशवाचमनुस्मरन्नल्पायुष्कतया विमनस्को विरताखिलचापलस्तद्दिनमुपोषितः पोषितः। तेनैवोपदेशापदेशामृतेन पुरुषनिःश्रेयसं किमिति निर्णेतुं विधिवन्**नारदीयपुराण**पद्यमिदमुपलब्धवानस्मि। यथा—

'हरेर्नाम हरेर्नाम हरेर्नामैव केवलम्।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा॥'

इति। तदनु दनुजदमनोपदेशमिव तन्मन्वानोऽ[2]न्वानोदितसकलकर्मा हरिनाममात्रशरणः शरणमपि विस्मृतवानस्मि। सर्वैरेवोपहस्यमानोऽपि प्रशान्तमना मनागपि नान्यवृत्तिस्तदेव मृत्युदिनमनुसंदधानो दधानो हृदि विषादं मासान्गणयन्नुपरते वर्षे प्रत्युपसन्ने च मृत्युदिवसेऽवशेषायुरहं **श्रीभागवताध्यापनकर्तुर्देवानन्द**पण्डितस्यालयं तच्छुश्रूषया गतः **प्रह्लादचरित**श्रवणकाले तमेव समयमासाद्य साद्यमानज्ञानो मृत्युवशं गतः पतितोऽस्मि तद्भवनालिन्दतोऽङ्गणतलम्। तदनु केनापि मृत्युमु-

---

१. आत्मानं ब्राह्मणं ब्रवीति इति ब्राह्मणब्रुवस्तत्संबोधनम्. ब्राह्मणाधम इत्यर्थः.
२. अन्वानोदितं परित्यक्तम्.

स्वान्मोचितं चितं पुनरायुपेत्यात्मानं मन्यमानो विवश इव पुनरुत्थितवानस्मि। तस्मिन्नेव समये सर्वे एव मामुत्थाप्य गृहमानिन्युः।

भगवान्—निशां समया स मया स्वप्नो दर्शितः प्रगतजीवितोऽवितोऽपि पुनर्जीवितदानेन।

(सर्वे विस्मयं नाटयन्ति।)

भगवान्—

स्पर्शमणेः स्पर्शवशात्कनकीभावं प्रजातमिव लोहम्।
तव तु तदेव शरीरं नारदशक्तिप्रवेशतोऽन्यदिव ॥ ५२ ॥

अद्वैतः—एवमेतत्। अन्यथा न मृतः पुनर्जीवति, किंतु भगवन्, सर्वे एवैते तव स्वभावभावसहचराः, तथापि मद्भजनेन जनेन शरीरान्तरमिव लभ्यते इति शिक्षया अक्षयानन्देन भगवतेदमध्यवसितम्। वस्तुतः स्तुतमहिमायं तव भक्तिश्रीवासः श्रीवासः।

भगवान्—अद्वैत, सत्यमेतत्।

अद्वैतः—भगवन्, मुरारिमुकुन्दादयोऽप्येते तव दास्यभावभावदातारो, दातारो नयनानन्दस्य।

भगवान्—अद्वैत, अन्तरनयोर्[1]नयो महानस्ति। उभौ सशङ्कं वेपाते पातेन कुलिशस्येव।

अद्वैतः—देव, कोऽसौ।

भगवान्—मुरारेर्मनसि न सिद्ध्यति भक्तिरसो रसोनदौर्गन्ध्यमिव [2]विसारिकाटवमध्यात्मभावनावनाग्रहग्रहिलत्वमेवास्ति। यदयमद्याप्यनुक्षण[3]क्षण एव [4]वाशिष्ठविषये।

अद्वैतः—किमपराद्धमध्यात्मयोगेन।

भगवान्—त्वया कथमिदमुच्यते।

यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे।
विक्रीडतोऽमृताम्भोधौ किमन्यैः [5]खातकोदकैः ॥ ५३ ॥

---

१. अनयो दुर्नीतिः. २. विस्तारिकदुत्वम्. ३. निलोत्सवः. ४. योगशास्त्रपर्यालोचने. ५. कूपादिजलैः.

**अद्वैतः**—मुकुन्देन किमपराद्धम्।

**भगवान्**—अनेन निरुच्यते। रुच्यते हि भगवतश्चतुर्भुजरूपमेव तदेवोपास्यम्।

**अद्वैतः**—किमिदं मतममतमहो।

**भगवान्**—ऐच्छिकं भगवतश्चतुर्भुजत्वम्, स्वाभाविकं हि द्विभुजत्वमेव। तथाहि—

'नराकृति परं ब्रह्म',
'गूढं परं ब्रह्म मनुष्यलिङ्गम्',
'परमात्मा नराकृतिः'

इति नराकृतित्वं द्विभुजत्वमेव।

**अद्वैतः**—

'स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम'।

तज्ज्ञापयन्तु निजरूपतत्त्वमिति।

**भगवान्**—(सानुग्रहम्।) तत्ते दर्शयितव्यम्।

**अद्वैतः**—अनुगृहीतोऽस्मि। किंतु भगवन्, अनयोः प्रसीद, सीदत एवैतौ, कृतमनोऽरुषा परुषापराधेन।

दुर्वासनाविषविषादहरे सुषीम-
च्छायाकरे पुरुकृपामकरन्दवर्षे।
अम्भोजगञ्जनकृती चरणातपत्रे
मूर्द्धयेतयोः कुरु विधेहि तथा प्रसादम्॥ ५४॥

**भगवान्**—(तथा कृत्वा।)

नायं सुखापो भगवान्देहिनां गोपिकासुतः।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिह॥ ५५॥

(इति पठित्वा सानुकम्पम्।) माऽतः परं विजातीयवासनासनाथौ भवतम्।

**उभौ**—(दण्डवत्पतित्वा।)

---

१. क्रियतः. २. पद्मतिरस्कारके. ३. सुखेन प्राप्यः.

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः।
मनः स्मरेतासुपतेर्गुणानां गृणीत वाक्कर्म करोतु कायः॥ ५६॥

(इति पठतः।)

**भगवान्**—तथास्तु।

**शुक्लाम्बरः**—(सदैन्यम्।) देव,

तप्तानि भूरीणि तपांसि नाथ बहूनि तीर्थानि च सेवितानि।
तथापि चेतो नहि मे प्रसन्नं कृपाकटाक्षं कुरु मे प्रसीद॥ ५७॥

(इति निःसाध्वसं साध्वसंकोचेन तत्पादयोः शिरो निदधाति।)

**श्रीवासः**—(आलोक्य। जनान्तिकम्।) गदाधर, पश्य पश्य।

कठिनतरतपस्योज्जृम्भदम्भप्रलम्भा-
　दशनिशनिकठोरं चित्तमस्य द्विजस्य।
सपदि भगवदङ्घ्रिस्पर्शनादेव भूत्वा
　द्रुतमिव नयनाभ्यां रोमभिश्चोज्जिहीते॥ ५८॥

तदधुनास्मिन्पुत्रधिया कीर्तनानन्देन सह विहरमाणा वयं मत्तनयोऽनयोपचित्यामीभिरेवोन्मादितो दितोऽप्यस्य व्यवहारमार्ग इति बहुशो निर्भर्त्सिताः स्मः शचीदेव्या। यद्यसावधुना धुनानमात्मजधियमात्मजमात्मजानन्दावेशविवशमेतं पश्यति, श्यति तदास्मिन्पुत्रभावं भावं हेयत्वेन। तत्कथमिदं संपत्स्यते।

**गदाधरः**—आचार्याश्चेत्कथयन्ति।

**अद्वैतः**—किं तत्।

**श्रीवासः**—(कर्णे।) एवमेव।

**अद्वैतः**—साधु। साऽधुनानीयताम्। कः संभ्रमः। भ्रमोऽस्या अपयातु।

**श्रीवासः**—यथाज्ञापयसि। (इति निष्क्रम्य तामादाय पुनः प्रविश्य च।) स्वामिन् आचार्य, विचार्य विज्ञापय जगन्मातरमेताम्। रमेतां भगवतोऽत्र कृपाप्रसादौ।

**अद्वैतः**—(अञ्जलिं बद्ध्वा।) देव, देवहूतिः कपिलेन किल ज्ञानयोगभ-

---

१. अवखण्डितः. 'दो अवखण्डने' इति धातोः क्तान्तस्य रूपम्. २. कपिलमाता.

क्तियोगयोगतः कृतार्थीकृता । सांप्रतमियं विश्वंभरजननी विश्वंभरजननीतिकलया परिवृता केवलबलमानप्रेमानन्देन कृतार्थीक्रियताम् । (इति कराग्रेणावलम्ब्य भगवदग्रतोऽवैयग्र्यतोऽम्यतोपेण समुपसर्पयति ।)

**शची**—(सचमत्कारविस्मयं स्वानन्दावेशपेशलमद्भुतनयं तनयं विलोक्य जाततदनुकम्पा कम्पायमानशरीरा वाग्देवतावतारप्रतिभाप्रतिभासमानेव किंचिदपाठीत्—)

विश्वं यदेतत्स्वतनौ निशान्ते यथावकाशं पुरुषः परो भवान् ।
बिभर्ति सोऽयं मम गर्भजोऽभूदहो नृलोकस्य विडम्बनं महत् ॥ ५९ ॥

(इति स्तुवती ग्रहगृहीतेव विह्वला बलादेव तच्चरणौ जिघृक्षति ।)

**अद्वैतः**—(निवार्य सविस्मयम् ।)

कुत इयमस्याः स्फूर्तिर्भवति हि सहजः स मातृभावोऽयम् ।
देहान्तरमपि भजते निरुपहितः प्राक्तनो भावः ॥ ६० ॥

**भगवान्**—देवि, यद्यपि जगज्जननी त्वमसि, तथापि श्रीवासादिषु यज्जातस्तेऽपराधस्तदुपरमे परमेश्वरप्रसादस्ते भावी । भावीचिनिकरपरिपन्थी हि भागवतापराधः ।

**अद्वैतः**—भगवन्, मैवम् ।

[1]नापराध्यति जगज्जननीयं क्वापि यज्जठरभूस्त्वमधीशः ।
हन्त मातरि भवन्ति सुतानां मन्तवः किल सुतेषु न मातुः ॥ ६१ ॥

(श्रीवासं संबोध्य ।) हंहो **श्रीवास,**

[2]यद्यपीशधिषणा तनयेऽभूद्देव कस्य दुहितुर्न तथापि ।
भक्तिरीदृगजनिष्ट यदेषा पुत्रपद्मयुगजिघृक्षुरिहासीत् ॥ ६२ ॥

**श्रीवासः**—अधुना निःसंकोचाः सः ।

**अद्वैतः**—भो भोः श्रीवासादयः, अस्य केवलबलमानैश्वर्यावेशेन मातरं प्रति मातृभावोऽपि निरस्तो मातृमातृभावोऽपि निरस्तोऽयं चेत्, तद्यथायमावेशो निवर्तते तथा स्तुध्वम् ।

**सर्वे**—स्वामिन्, एवमेव । (इत्यद्वैतेन समं तथा कुर्वन्ति ।) भो देव,

[3]शाश्वती भगवतो भगवत्ता नाथ बोधसुखचिन्मयता च ।
ही तथापि हि बिभर्ति यदा यद्धर्म्म तत्प्रकृतिमेष दधाति ॥ ६३ ॥

---

१. २. ३. एते श्लोका जीवानन्दविद्यासागरमुद्रापितपुस्तके गद्यरूपेण लिखिता उपलभ्यन्ते

तदिदानीं भगवन्तोऽवन्तोऽनुकम्पां तथां कर्तुमर्हन्ति । यदाविष्कृतभक्तावतारतया शैशवमारभ्य मद्विधभाग्यानुसारिरूपं गृह्णद्भिर्वयमामोदिता दिताखिलतापा भवद्भिः, तदेवाधुना प्रकटयितुमर्हन्ति । यदाहार्जुनः—

'तदेव मे दर्शय देव रूपम्'

इत्यारभ्य ।

'दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥'

इति । वस्तुतस्तु

अलौकिके वस्तुनि लौकिकत्वं नालौकिकत्वस्य विरोधहेतुः ।
मण्यन्तराणां गुणसंनिवेशश्चिन्तामणेर्न ह्यपकर्षकारी ॥ ६४ ॥

भगवान्—(स्मारितभक्तावेशस्तत्रैव कृतप्रवेशः प्रकृतिमास्थाय ।) भो अद्वैतादयः, किमहमेतावन्तं कालं सुषुप्त इवासम् । कथं भवद्भिर्नाहं प्रबोधितः ।

सर्वे—भगवन्, आनन्दनिद्राभङ्गभिया ।

भगवान्—हन्त, एतावान्समयो मयोपहतज्ञानेन वृथा गमितः । तदागच्छत । श्रीकृष्णं कीर्तयामः ।

सर्वे—(सहर्षम् ।) यथाज्ञापयति देवः ।

(इति निष्क्रान्ताः सर्वे ।)

इति स्वानन्दावेशो नाम प्रथमोऽङ्कः ।

---

द्वितीयोऽङ्कः ।

(ततः प्रविशति विरागः ।)

विरागः—(सर्वतोऽवलोक्य ।) अहो, बहिर्मुखबहुलं जगत् ।

न शौचं नो सत्यं न च शमदमो नापि नियमो
　न शान्तिर्न क्षान्तिः शिव शिव न मैत्री न च दया ।
अहो मे निर्व्याजप्रणयिसुहृदोऽमी कलिजनैः
　किमुन्मूलीभूता विदधति किमज्ञातवसतिम् ॥ १ ॥

हन्त, कथमज्ञातवासस्तेषां संभावनीयः, तथाविधस्थलविरहात् । तथाहि ।

षष्ठे कर्मणि केवलं कृतधियः सूत्रैकचिह्ना द्विजाः
संज्ञामात्रविशेषिता भुजभुवो वैश्यास्तु बौद्धा इव ।
शूद्राः पण्डितमानिनो गुरुतया धर्मोपदेशोत्सुकाः
वर्णानां गतिरीदृगेव कलिना हा हन्त संपादिता ॥ २ ॥

अपि च ।

विवाहायोग्यत्वादिह कतिचिदाद्याश्रमयुजो
गृहस्थाः स्त्रीपुत्रोदरभरणमात्रव्यसनिनः ।
अहो वानप्रस्थाः श्रवणपथमात्रप्रणयिनः
परिव्राजावेशैः परमुपहरन्ते परिचयम् ॥ ३ ॥

(कतिचित्पदानि परिक्रम्य ।) अहो, अयं समीचीनो जनपदः । अत्र हि भूयो रयोज्ज्वलप्रतिभाः प्रतिभान्ति विद्वांसः । तदमी अवगाह्या वाह्या अवाह्या वा । (इति चिरं निरूप्य ।) अहो,

अभ्यासाद्य उपाधिजात्यनुमितिव्याप्त्यादिशब्दावले-
र्जन्मारभ्य सुदूरदूरभगवद्वार्ताप्रसङ्गा अमी ।
ये यत्राधिककल्पनाकुशलिनस्ते तत्र विद्वत्तमाः
स्वीयं कल्पनमेव शास्त्रमिति ये जानन्त्यहो तार्किकाः ॥ ४ ॥

तदलमेभिः सह वार्तया। इतोऽन्यतो गच्छामि। (इति कियद्दूरं गत्वा ।) अहो, अमी अमीवरहिता हिताभियोगा इव दृश्यन्ते। तदमून्निरूपयामि। (इति तथा कृत्वा ।) अहो, अमी मायावादिनः । तथाहि ।

सन्मात्रानिर्विशेषाचिदुपधिरहिता निर्विकल्पा निरीहा
ब्रह्मैवासीति वाचा शिव शिव भगवद्विग्रहे लब्धवैराः ।
येऽमी श्रौतप्रसिद्धानहह भगवतोऽचिन्त्यशक्त्याद्यशेषा-
न्प्रत्याख्यान्तो विशेषानिह जहति रतिं हन्त तेभ्यो नमो वः ॥५॥

(इति तानपास्य पुनरन्यतो गत्वा परितः परिलोक्य ।) अहो, अमी यदन्योन्यं विवदन्ते, तदस्य तत्त्वमवगन्तव्यम् । (इति निभाल्य ।) अहो, कपिल-क-

णाद-पातञ्जल-जैमिनिमतकोविदाः, एते अन्योन्यं विवदन्ते । भगवत्तत्त्वं न केऽपि जानन्ति। तदितो गन्तव्यम् । (इति पुनः कतिचित्पदानि गत्वा ।) अहो, दक्षिणस्यां दिशि पतितोऽस्मि । यदमी आर्हत-सौगत-कापालिकाः प्रचण्डा हि पाखण्डाः । एते पाशुपता अपि हतायुषो मां हनिष्यन्ति । तदितः पलायनमेव शरणम् । (इत्यपसृत्य कियद्दूरं गत्वा किंचिदवलोक्य ।) अहो, अयं साधुर्भविष्यति, यतः खलु नदीतटनिकटप्रकटशिलापट्टघटितसुखोपवेशः क्लेशातीतो गुणातीतं किमपि ध्यायन्निव समयं गमयति । तदमुं निरूपयामि । (इति तथा कृत्वा ।) अहो,

जिह्वाग्रेण ललाटचन्द्रजसुधास्यन्दाध्वरोधे मह-
द्दाक्ष्यं व्यञ्जयतो निमील्य नयने बद्धासनं ध्यायतः ।
अस्योपात्तनदीतटस्य किमयं भङ्गः समाधेरभूत्

(इति सविस्मयं विचिन्त्य ।) अहो, ज्ञातम् ।

पानीयाहरणप्रवृत्ततरुणीशङ्खस्वनाकर्णनैः ॥ ६ ॥

तदिदमुदरभरणाय केवलं नाट्यमेतस्य । (पुनरन्यतो गत्वा परितोऽवलोक्य ।) अहो, अयं निष्परिग्रह इव लक्ष्यते । तैर्थिक एव भविष्यति । तदस्य दैवादागतेन पथिकेन सह संकथयतः कथयैव हृदयमाकलनीयम् । (इत्याकर्ण्य स्वयमनुवदति ।)

गङ्गाद्वारगयाप्रयागमथुरावाराणसीपुष्कर-
श्रीरङ्गोत्तरकोशलाबदरिकासेतुप्रभासादिकाम् ।
अब्देनैव परिक्रमैस्त्रिचतुरैस्तीर्थावलीं पर्यट-
न्नब्दानां कति वा शतानि गमितान्यस्मादृशानेतु कः ॥ ७ ॥

(इत्यनूद्य ।) भद्रं भोः, भद्रम् । कलिनोपद्रुतं सत्यं निभृतं त्वयि वर्तते । तदितोऽपसरामः । (इति तथा कृत्वा पुरतोऽवलोक्य ।) अहो, अयं तपस्वी समीचीनो भविष्यतीव निभालयामि । (इति कृत्वा ।) हन्त हन्त, ततोऽप्ययं दुष्कृती । तथा हि ।

हूंहूंहूमिति तीव्रनिष्ठुरगिरा दृष्ट्याप्यतिक्रूरया
दूरोत्सारितलोक एष चरणावुत्क्षिप्य दूरं क्षिपन् ।
मृत्स्नालिप्तललाटदोस्तटगलग्रीवोदरोराः कुशै-
र्दीव्यत्पाणितलः समेति तनुमान्दम्भः किमाहो स्मयः ॥ ८ ॥

अहो, चित्रमिदानीम् ।

विष्णोर्भक्तिं निरुपधिस्मृते धारणाध्याननिष्ठा
शास्त्राभ्यासश्रमजपतपःकर्मणां कौशलानि ।
शैलूषाणामिव निपुणताधिक्यशिक्षाविशेषा
नानाकारा जठरपिठरावर्तपूर्तिप्रकाराः ॥ ९ ॥

तदहो कले, साधु । एकातपत्रीकृतं भुवनतलं भवता । तथा हि ।

उत्सारितं शमदमादि निगृह्य गाढं
भृत्यीकृतं क्वचन हन्त धनार्जनाय ।
कामं समूलमुदमूल्यत धर्मशाखी
मैत्र्यादयश्च किमतः परमीहितव्यम् ॥ १० ॥

(क्षणं विमृश्य ।) तादृशबन्धुजनविप्रयोगजनितक्लेशेन चिरतरतदनुसंधानकृतपरिश्रमेण च निःसारीभूतभूतलावलोकशोकेन च भृशमाकुलोऽस्मि । तेन क्वचन च क्षणं विश्रमणीयम् । (इति तथा कृत्वा सबाष्पम् ।)

दृष्टं सर्वमिदं मनोवचनयोरुद्देश्यतच्चेष्टयो-
र्वैजात्यैकविसंकुलं कलिमलश्रेणीकृतग्लानितः ।
कृष्णं कीर्तयतस्तथानुभजतः साश्रून्सरोमोद्गमा-
न्बाह्याभ्यन्तरयोः समान्बत कदा वीक्ष्यामहे वैष्णवान् ॥११॥

(आकाशे कर्णं दत्वा ।) किं ब्रवीषि—'यत्र भक्तिस्तत्रैव ते द्रष्टव्या' इति । (क्षणं विमृश्य ।) अहो, भक्तिदेवी क्वाप्यस्तीति संभाव्यते । (पुनराकाशे लक्ष्यं बद्ध्वा ।) किं ब्रवीषि भोः,—

'गौडक्षोणी जयति कतमा पुण्यतीर्थावतंस-
प्राया यासौ वहति नगरीं श्रीनवद्वीपनाम्नीम् ।

---

१. नटानाम्.

यस्यां चामीकरचयरुचेरीश्वरस्यावतारो
यस्मिन्मूर्ता पुरि पुरि परिस्पन्दते भक्तिदेवी ॥ १२ ॥'

(इति सहर्षम्।) हन्त हन्त। जीवद्भिः किं न दृश्यते। तदितस्तत्रैव गच्छामि। (इति कतिचित्पदानि परिक्रामति।)

(ततः प्रविशति भक्तिदेवी।)

भक्तिदेवी—(पुरोऽवलोक्य।) अम्मो, को एसो णिरन्तरगरुओव्वेअवेअणाजज्जरिज्जन्तमाणसो माणसोहग्गविब्भंसगलाणाणणो मए पडिचिज्जन्तोवि मं आलोइअ लोइअभिण्णदसं आवन्नो सन्तो संतोसं पआसअन्तो सअं तोदं मुञ्चन्तो व्व इध आअच्छदि। हन्त, अम्हाणं एदादिशीए संपत्तिपडिपत्तिपडिवादिए सुत्थदसाए भाउणो विराअस्स सङ्गो संगोचरो ण होइ। ण आणे दुज्जनेहिं कलिजणेहिं कलिदाघाहिदो उव्वरिओ ण वेत्ति। (क)

विरागः—(अवलोक्य।) इयमेव भक्तिदेवी। तथा हि

अन्तः प्रसादयति शोधयतीन्द्रियाणि
मोक्षं च तुच्छयति किं पुनरर्थकामौ।
सद्यः कृतार्थयति सन्निहितैव जीवा-
नानन्दसिन्धुविवरेषु निमज्जयन्ती ॥ १३ ॥

तदुपसर्पामि। (इत्युपसृत्य।) देवि, विरागोऽहं प्रणमामि।

भक्तिदेवी—(सवात्सल्यम्।) भातओ, जीवसि। वसिणं पराणोसि तुमम्। एहि एहि। (इति करेण स्पृशति।) (ख)

---

(क) अहो, क एष निरन्तरगुरूद्वेगवेदनाजर्जरितमानसो मानसौभाग्यविभ्रंशग्लानाननो मया परिचीयमानोऽपि मामालोक्य लौकिकभिन्नदशामापन्नः सन् संतोषं प्रकाशयन्स्वयं तोदं मुञ्चन्निव इत आगच्छति। हन्त, अस्माकं एतादृश्यां संपत्तिप्रतिपत्तिप्रतिपादिन्यां सुस्थदशायां भ्रातुर्विरागस्य सङ्गः संगोचरो न भवति। न जाने दुर्जनैः कलिजनैः कलिताघाहित उद्धृत्तो न वेति।

(ख) भ्रातः, जीवसि। वशिनां प्राणोऽसि त्वम्। एह्येहि।

**विरागः**—(चरणावभिवाद्य ।) देवि, कथय कथं सत्यादय इव कलिना भवत्यो न पराभूताः ।

**भक्तिदेवी**—विराअ, ण आणेसि । सुणह । अम्हाणं ज्जेव कए कोवि महाकारुणिओ भअवं भअबन्धच्छेअअचरिदो गोरचन्दो ओदीण्णो । (क)

**विरागः**—भगवति, कथय किमत्र रहस्यम् ।

**भक्तिदेवी**—विराअ, एदस्सिं कलिआले कलिआलेशमेत्तंवि धम्मन्तरं न त्थि । ण त्थिरदरं किंपि होइ । केअलं अलंकरेदि । एदं कलिं भअवद्धम्मो वद्धं मोहं वि पराकरोदित्ति साहणसद्धसद्धम्मो । सुद्धभत्तिजोएण एणसामवहारएण कलिमलमथणआरिणा आचण्डालं चण्डाऽलङ्घणिज्जदुवासणावासणासेण सङ्गोपङ्गाओ मादिसीओ भत्तिदेइओ सङ्गे कदुअ भअवदा अवदारो किदो भत्तवेसेण । (ख)

**विरागः**—अवगतमिदं मितं प्रकाशयन्त्या गगनवाण्या । किंतु

भवत्यो वा किमीहन्ते स वा देवः किमीहते ।
निराश्रयस्य मम वा किमसौ भविताश्रयः ॥ १४ ॥

**भक्तिदेवी**—(संस्कृतमाश्रित्य ।) विराग, श्रूयताम् ।

पुनीमश्चाण्डालानपि खलु धुनीमोऽखिलमलं
लुनीमः संस्कारानपि हृदि तदीयानतिदृढान् ।
कृपादेवी तस्य प्रकटयति दृक्पातमिह चे-
त्तदा तेषामन्तः कमपि रसभावं च तनुमः ॥ १५ ॥

**विरागः**—तस्य कृपादेवीं विना स्वातन्त्र्येण भवतीनां तथा सामर्थ्यं न विद्यते ।

---

(क) विराग, न जानासि । शृणु । अस्माकमेव कृते कोऽपि महाकारुणिको भगवान्भवबन्धच्छेदकचरितो गौरचन्द्रोऽवतीर्णः ।

(ख) विराग, एतस्मिन्कलिकाले कलिकालेशमात्रमपि धर्मान्तरं नास्ति । न स्थिरतरं किमपि भवति । केवलमलंकरोति । एतं कलिं भगवद्धर्मो बन्धं मोहमपि पराकरोतीति साधनसाध्यसद्धर्मः । शुद्धभक्तियोगेनैनसामवहारकेण कलिमलमथनकारिणा आचण्डालं चण्डाऽलङ्घनीयदुर्वासनावासनाशेन साङ्गोपाङ्गां मादृशीं भक्तिदेवीं सङ्गे कृत्वा भगवता अवतारः कृतो भक्तवेशेन ।

**भक्तिदेवी**—तस्स वा तज्जणाणं वा णवाणुग्गहमन्तरेण अम्हे ण होम्ह। किं उण तधा कुणम्ह। (क)

**विरागः**—द्वितीयप्रश्नस्योत्तरं किम्।

**भक्तिदेवी**—विराअ, सुणेहि। (इति संस्कृतेन।)

नवद्वीपे नासीदहह स जनो यस्य न पुरे
हरेर्गेहं नो तद्यदपि भगवन्मूर्तिरहितम्।
न सा यस्याः सेवा न भवति न सा या न सरसा
रसो नासौ संकीर्तननटनमुख्यो न खलु यः[1] ॥ १६ ॥

इयं ज्जेव तस्स ईहा। (ख)

**विरागः**—किमयं स्वयमेव तथा ज्ञापयति। किं वा ते त एव तदाशयमभिमत्य मत्यनुसारेण सारेण[2] व्यवहरन्ति।

**भक्तिदेवी**—तस्स तह ज्जेव महिमा महिमाणदो जं दट्ठुण ज्जेव तं तह ज्जेव ग्गहग्गत्था विअ होन्ति। जणाओ जह तस्स आसअं सअं ज्जेव सव्वे जाणन्ति कुणन्ति च तदणुरूअम्। तस्स ओदारे कमलावि ओदीण्णे व्व। जदो ण कस्सवि देण्णं तत्थ आसि। आशिशुआलं सअं च जं करोदि तं सुणह। (ग) (संस्कृतमाश्रित्य।)

श्रीवासस्य गृहे कदाचन कदाप्याचार्यरत्नालये
श्रीविद्यानिधिमन्दिरेऽपि च कदा गेहे मुरारेरपि।

---

(क) तस्य वा तज्जनानां वा नवानुग्रहमन्तरेण वयं न भवामः। किं पुनस्तथा कुर्मः।

(ख) विराग, शृणु। इयमेव तस्येच्छा।

(ग) तस्य तथैव महिमा महिमानतो यत् दृष्ट्वैव तत्तथैव ग्रहग्रस्ता इव भवन्ति। जना यथा तस्य आशयं स्वयमेव सर्वे जानन्ति कुर्वन्ति च तदनुरूपम्। तस्य अवतारे कमलापि अवतीर्णेव। यतो न कस्यापि दैन्यं तत्र आसीत्। आशिशुकालं स्वयं च यत् करोति तत् शृणु।

---

१. 'स्थाप्यतेऽपोह्यते वापि यथा पूर्वं परं परम्।
विशेषणतया यत्र वस्तु सैकावली द्विधा ॥' इति लक्षणादत्रैकावल्यलंकारः.

२. तत्त्वतः.

गायन्सुप्रियपार्षदेषु पुलकस्तम्भाश्रुघर्मादिभिः
सान्द्रानन्दमयीभवन्ननुदिनं देवो नरीनृत्यते ॥ १७ ॥

**विरागः**—भगवति, स किं सर्वदा भक्ताचरितमेव प्रकटयति । किं वा कदाचिदैश्वर्यमपि ।

**भक्तिदेवी**—(संस्कृतेन ।) विराग, यद्यपि

अलौकिकीतोऽपि च लौकिकीयं लीला हरेः काचन लोभनीया ।
महेशशीर्षादपि भूमिमध्यं गतैव गङ्गा मुदमातनोति[1] ॥ १८ ॥

तहवि कहपि कहिंपि अलोइअंपि पअडेदि । तधाहि कहिंपि दिअहे शिरिवासवासम्मि करिज्जन्तदेवगेहप्पदक्खिणो दक्खिणाङ्गणगएण केणवि भाअधेअसूइवुत्तिणा महामज्जवेण अमलक्खेण मलेच्छेण वसणं सीव्वन्तेन दीव्वन्तेण दीहदरमएण भअवं विस्संभरो दिट्टो । दट्ठूण तक्खणदो मइरामअदोवि मादअतमेण तस्स दंशणमएण भेम्हलो भविअ विअशिदणेत्तो हीहीमुओ दिट्ठं दिट्ठं कम्पिअसव्वङ्गपुलइदो णिरन्तरनिस्सरन्तप्पवाहवाहसलिलत्थिमिदवच्छत्थलो वसणादिअं विच्छिविअ उद्धबाहू णच्चिदं पउत्तो सो । तदो तं तहाविधं पेक्खिअ भअवं अवञ्चअन्तो शिरिवासं भणिदवन्तो—'श्रीवास, किमिदम् । कथमस्मादयमीदृग्जातो दृग्जातोत्सव इव ।' तदो तेणवि भणिदम्—'णिदंशणं व्व कुणन्तेण पडिहासरसस्स ।' भगवन्, अपूर्व एवायं तव मदस्य महिमा यतोऽयमद्य मद्यघटघटमानासक्तिरपि न धियं जहाति । हा, तिलमात्रभवद्दर्शनेनानेनो[2]नेना जातोऽ[3]जातोदरहितो हितो भवन्नतिममाद । (क)

---

(क) तथापि कदापि कथमपि अलौकिकमपि प्रकटयति । तथाहि कस्मिन्नपि दिवसे श्रीवासवासे क्रियमाणदेवगेहप्रदक्षिणो दक्षिणाङ्गणगतेन केनापि भागधेयसूचीवृत्तिना महामद्यपेन अमलाक्षेण म्लेच्छेन वसनं सीव्यता दीव्यता दीर्घतरमदेन भगवान् विश्वंभरो दृष्टः । दृष्ट्वा तत्क्षणतः मदिरामदतोऽपि मादकतमेन तस्य दर्शनमदेन विह्वलो भूत्वा विकशितनेत्रो हीहीमुखो दृष्टं दृष्टं कम्पितसर्वाङ्गपुलकितो

---

१. 'दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्' इति दर्पणलक्षणादत्र दृष्टान्तालंकारः. २. पापरहितः. ३. अविद्याजनितदुःखशून्यः.

**विरागः**—ततस्ततः।

**भक्तिदेवी**—तदो तदोपहुदि भअवदो णाममेत्तसरणो सव्वपरिअरं उज्झिय ओधूअवेसो भुविअ णच्चन्तो गाअन्तो जवणाचारिएहिं ताडिज्जन्तोवि भअवदो णामसंकीत्तणं कुणन्तो ज्जेव वट्टदि। केणवि पुच्छिदो। उण विस्संभरो ज्जेव ईसरो णावरो कोवित्ति भणेदि। सअलेहिं भाअवदेहिं विहिददेहजात्तो सिद्धो विअ भविअ विचरेदि। (क)

**विरागः**—देवि, कीदृशरूपमनेन दृष्टम्।

**भक्तिदेवी**—विराअ, आणन्दो ज्जेव भअवदो रूअम्। जेण रूएण महं ज्जेव आणन्दो होइ। तं ज्जेव तस्स रूअंति इदरेदरसव्वपेच्छत्तणं आणन्दरूवाणंत्ति आणन्दतारतम्मेण रूअदंशणस्स तारतम्मम्। (ख)

**विरागः**—कथमयं नीचयोनिरेतादृशसौभाग्यभाजनमासीत्।

**भक्तिदेवी**—(संस्कृतेन।)

न जातिशीलाश्रमधर्मविद्याकुलाद्यपेक्षी हि हरेः प्रसादः।
यादृच्छिकोऽसौ बत नास्य पात्रापात्रव्यवस्थाप्रतिपत्तिरास्ते ॥ १९ ॥

**विरागः**—एवमेव। ततस्ततः।

**भक्तिदेवी**—तदो अवरस्सिं दिअहे मुरारिभअणाङ्गणे पुण्णिमाचन्द-

---

निरन्तरनिःसरत्प्रवाहवाहसलिलस्तिमितवक्षस्थलो वसनादिकं विक्षिप्य ऊर्ध्वबाहुर्नर्तितुं प्रवृत्तः सः। ततस्तं तथाविधं प्रेक्ष्य भगवान् अवश्वयन् श्रीवासं भणितवान्। ततस्तेनापि भणितम्—निर्दर्शनमिव कुर्वता परिहासरसस्य।

(क) ततस्ततःप्रभृति भगवतो नाममात्रसरणः सर्वपरिकरं त्यक्त्वा अवधूतवेशो भूत्वा नृत्यन् गायन् यवनाचार्येण ताड्यमानोऽपि भगवतो नामसंकीर्तनं कुर्वन्नेव वर्त्तते। केनापि पृष्टः। पुनर्विश्वंभर इव ईश्वरो नापरः कोऽपीति वदति। सकलैर्भागवतैर्विहितदेहयात्रः सिद्ध इव भूत्वा विचरति।

(ख) विराग, आनन्द एव भगवतो रूपम्। येन रूपेण महानेव आनन्दो भवति। तदेव तस्य रूपमिति इतरेतरसव्यपेक्षितृत्वम् आनन्दरूपाणामिति आनन्दतारतम्येन रूपदर्शनस्य तारतम्यम्।

चन्दिआपक्खालिआए णिशाए उववि‍ट्ठेहिं सअलेहिं भाअवदेहिं सो ज्जेव देओ [1]संकरिषणरूओ दिट्ठो । (क)

**विरागः**—देवि, विशिष्य कथय ।

**भक्तिदेवी**—अग्गदो बम्भमिज्जन्तमत्तमहुअरणिअरपरिपिज्जन्तचन्दिआचअतक्कालसामलिदगगणतलान्धआरम्मि दीसन्तम्मि कोवि [2]कंअम्बरीपरिमलो सअलजणेहिं आलद्धो । (ख)

**विरागः**—ततस्ततः ।

**भक्तिदेवी**—तदो आलद्धे परिमले सअलेहिं भअवं पुच्छिदो । जधा—भगवन्, कथमाकस्मिकोऽयं पुष्पंधयगणान्धीकरणचणः परिमलो विमलो विसयं नः समुल्लासयति कादम्बर्याः । परतश्च जनितकौतूहलं हलं विपक्षपक्ष[3]मुषलं मुषलं चालोक्यते । (ग)

**विरागः**—ततस्ततः ।

**भक्तिदेवी**—तदो सिरिविस्संभरदेएण उत्तम्—'हन्त भोः, निखिल[4]हृदयसंकर्षणेन [5]संकर्षणेन भगवताऽवताद्य प्रादुर्भवितव्यम् । तदग्रे कादम्बरी वरीयसी तत्प्रियाणां तदायुधं [6]युधं विनापि विराजमानं हलं मुषलं च प्रादुरभूत् । (घ)

**विरागः**—ततस्ततः ।

**भक्तिदेवी**—तदो तह णिअदन्तो ज्जेव सो देओ तेहिं मइरामोअमुदिअलोललोहिदलोअणो एककण्णतडतण्डविदकुण्डलो ससिमण्डलपाण्डरो

---

(क) ततोऽपरस्मिन्दिवसे मुरारिभवनाङ्गणे पूर्णिमाचन्द्रचन्द्रिकाप्रक्षालितायां निशायाम् उपविष्टैः सकलैर्भागवतैः स एव देवो संकर्षणरूपो दृष्टः ।

(ख) अग्रतो बम्भ्रम्यमाणमत्तमधुकरनिकरपरिपीयमानचन्द्रिकाचयतत्कालश्यामलितगगनतलान्धकारे दृश्यमाने कोऽपि कादम्बरीपरिमलः सकलजनैरालब्धः ।

(ग) तत आलब्धे परिमले सकलैर्भगवान्पृष्टः । यथा—

(घ) ततः श्रीविश्वंभरदेवेनोक्तम् ।

---

१. बलभद्ररूपधरः. २. सुरागन्धः. ३. घातनम्. ४. चित्ताकर्षणेन. ५. बलदेवेन. ६. युद्धम्.

सो ज्जेव गोरचन्दो अइसअं सअं ज्जेव तालङ्कोऽलं कोदूहलेण संभूतो। तदो तच्चरिदाहिदणअणअगीदपदाइं गाअन्तेहिं तेहिं णच्चाविदो बहुदरं ईडिदो वि क्खणं विम्हअकारि संवुत्तो । (क)

विरागः—ततस्ततः ।

भक्तिदेवी—एव्वं बुद्धवैराहणैरसिंहमुक्खतरावदाराणुआरं कमेण कदुअ गदे दिअहे अहेदुअकरुणेण णिच्चाणन्दस्स च्छब्भुअअं रूअं तेण दंसिदम् । (ख)

विरागः—कीदृशं तत् ।

भक्तिदेवी—(संस्कृतेन ।)

भुजाभ्यामुभाभ्यां दधच्चारुवंशीं चतुर्भिर्गदाशङ्खचक्राम्बुजानि ।
किरीटं च हारांश्च केयूरके च स्रजं वैजयन्तीं मणिं कौस्तुभं च ॥२०॥

अपि च ।

अनाहार्यसौन्दर्यमाधुर्यधुर्यं महौदार्यचातुर्यगाम्भीर्यशौर्यम् ।
अवैधुर्यधैर्यं सदा सौकुमार्यं महस्तुर्यमार्यं तदाश्चर्यमासीत् ॥ २१ ॥

विरागः—ततस्ततः ।

भक्तिदेवी—तदो तं रूअं पेक्खिअ परमाणन्दणिप्फन्दो उअच्चिदरोमञ्चकञ्चुओ बहुदरं त्थुवन्तो आसि णिच्चाणन्दो । जहा । (ग)

---

(क) ततस्तथा निगदन्नेव स देवस्तैर्मदिरामोदमुदितलोललोहितलोचन एककर्णतटताण्डवितकुण्डलः शशिमण्डलपाण्डरः स एव गौरचन्द्रोऽविषयं स्वयमेव तालाङ्कोऽलं कौतूहलेन संभूतः । तदा तच्चरिताहितनवनवगीतपदानि गायद्भिस्तैर्नर्तितो बहुतरमीडितोऽपि क्षणं विस्मयकारी संवृत्तः ।

(ख) एवं बुद्धवराहनरसिंहमुख्यतरावतारानुकारं क्रमेण कृत्वा गते दिवसेऽहैतुककरुणेन नित्यानन्दस्य षड्भुजं रूपं तेन दर्शितम् ।

(ग) ततस्तद्रूपं प्रेक्ष्य परमानन्दनिष्पन्द उदञ्चितरोमाञ्चकञ्चुको बहुतरं स्तुवन्नासीन्नित्यानन्दः । यथा ।

---

१.–२.–३. दशावतारेषु नवमोऽवतारः, तृतीयोऽवतारः, चतुर्थोऽवतारः.

हरिस्त्वं हरस्त्वं विरिञ्चिस्त्वमेव त्वमापस्त्वमग्निस्त्वमिन्दुस्त्वमर्कः।
नभस्त्वं क्षितिस्त्वं मरुत्त्वं मुरारे नमस्ते नमस्ते समस्तेश्वराय॥ २२॥

अपि च।

भुजैः षड्भिरेभिः समाख्याति कश्चिन्निसर्गोग्रषड्वर्गहन्तेति भोस्त्वाम्।
वयं ब्रूमहे हे महेच्छ त्वमेभिश्चतुर्वर्गदो भक्तिदः प्रेमदश्च॥ २३॥

**विरागः**—अहो, अत्यद्भुतमिदम्। ततस्ततः।

**भक्तिदेवी**—तदो ईसरभावो दाव ईदिसो तस्स कधिदो। पेम्मावेसो सुणीअदु। एत्थ पुरे तिण्णविहा ज्जेव पुरिसाओ। केवि अणुरत्ताओ, केवि मज्झमाणुरत्ताओ, केवि णाणुरत्ताओ णावि विरत्ताओ। विज्झत्थिणो हि णअरवीहीए अप्पाणअं ओवारिअ सुरणईसिणाणं कदुअ त्थिमिदणिअवसणं च्चेअ आअच्छन्तं पेक्खिअ कोवि महुरतरं भअवदो णामपदम्, कोवि सरसतरं भाअवदपज्जम्, कोवि पेम्मपडिपण्णं ललिदतरगीदं सुणावेदि। तदो तं सुणन्तो ज्जेव मग्गमज्झम्मि भूदले णिवडिअ त्थिमिदवसणणिवडन्तजलकद्दमिदपुहवीदलणिवडणकद्दमिदसव्वङ्गो वाप्फसलिलेहिं सीमन्तिदवच्छत्थलकद्दमो आणन्दभेम्भलदाए लदाए बद्धो विअ विज्जुद्दामदामपुञ्जो विअ लुठन्तो वट्टेदि। तधाविअं पेक्खिअ ते सहअराओ चावलदोसदुसिदाओ हसन्तो कोदूहलं कुणन्ति। मुहुत्तन्तरे णिअपरिअणाओ उत्थाविअ पुणो सुरणईं लम्भिअ पक्खालिदसव्वङ्गं सिणावेन्ति। एदं सुणिअ णिअतणअस्स णअस्स वइवसिअं अणुभविअ तस्स जणणी जणणीदिविसारदावि। (क)

---

(क) तत ईश्वरभावस्तावदीदृशस्तस्य कथितः। प्रेमावेशं शृणुत। अस्मिन्पुरे त्रिविधा एव पुरुषाः। केऽपि अनुरक्ताः, केऽपि मध्यमानुरक्ताः, केऽपि नानुरक्ता नापि विरक्ताः। विद्यार्थिनो हि नगरवीथ्यामात्मानमुत्तार्य सुरनदीस्नानं कृत्वा स्तिमितनिजवसनं चेममागच्छन्तं प्रेक्ष्य कोऽपि मधुरतरं भगवतो नामपदम्, कोऽपि सरसतरं भागवतपद्यम्, कोऽपि प्रेमपरिपन्नं ललिततरगीतं श्रावयति। ततस्तं शृण्वन्नेव मार्गमध्ये भूतले निपत्य स्तिमितवसननिपतज्जलकर्दमितपृथिवीतलनिपतनकर्दमितसर्वाङ्गो बाष्पसलिलैः सीमन्तितवक्षःस्थलकर्दम आनन्दविह्वलतया लतया बद्ध इव

**विरागः**—अहो, प्रेमानन्दवैवश्यमवश्यमस्य ।

**भक्तिदेवी**—अवरस्सिं वासरे वासरेससहस्ससरिसमहामहानन्दपरवसो आचारिअरअणपुररअणपुरदो णच्चिअ णिअघरं आअच्छन्तो मग्गमज्झम्मि केणावि बम्हणबन्धुणा बन्धुणाहो णिअअणस्स देओ दिट्ठो । दिट्ठिय तं सोसव्वङ्गगलन्तसित्तो सकाउ वाअं उवाअं अण्णं ण पेक्खिअ किम्पि गदन्तो आसि । भो भो शचीपुत्तअ विस्संभर, भवन्तं पभवन्तं परमं पुरिसं सव्वे णिअदन्ति । दन्तिवरविक्कमविक्कमवैभवं तुह बहुतरं ज्जेव णिरूपेन्ति । जइ मज्झ पामरस्स एसो गओ गओ करिज्जइ तदो सच्चं ज्जेव तुमं भूमङ्गलरूओ ईसरो सरोअणअणो सअं ज्जेव । (क)

**विरागः**—ततस्ततः ।

**भक्तिदेवी**—तदो भअवदा जादानुकम्पेण कम्पेण रोमञ्चेण अ विलसन्तदेहं तं बम्हणपाशं पाशं मिच्चुणो उवगदं लच्छीकदुअ णिअदिदम्—(ख) 'अये, यस्तावदीश्वरः स खलु दुष्प्राप्य एव सर्वेषाम् । किमिति मामुपाल-

---

विधुद्दामदामपुञ्ज इव लुठन्वर्तते । तथाविधं प्रेक्ष्य ते सहचराश्चापलदोषदूषिता हसन्तः कौतूहलं कुर्वन्ति । मुहूर्त्तान्तरे निजपरिजना उत्थाप्य पुनः सुरनदीं लम्भयित्वा प्रक्षालितसर्वाङ्गं स्नापयन्ति । इदं श्रुत्वा निजतनयस्य नयस्य वरिवसितमनुभाव्य तस्य जननी जननीतिविशारदापि ।

(क) अपरस्मिन्वासरे वासरेशसहस्रसदृशमहामहानन्दपरवश आचार्यरत्नपुररत्नपुरतो नर्तित्वा निजगृहमागच्छन्मार्गमध्ये केनापि ब्राह्मणबन्धुना बन्धुनाथो निजजनस्य देवो दृष्टः । दृष्ट्वा तं स सर्वाङ्गगलनसिक्तः सकाकु वाचमुपायमन्यं न प्रेक्ष्य किमपि गदन्नासीत् । भो भोः शचीपुत्र विश्वंभर, भवन्तं प्रभवन्तं परमं पुरुषं सर्वे निगदन्ति । दन्तिवरविक्रमविक्रमवैभवं तव बहुतरमेव निरूपयन्ति । यदि मम पामरस्य एष गदो गतः क्रियते तदा सत्यमेव त्वं भूमङ्गलरूप ईश्वरः सरोजनयनः स्वयमेव ।

(ख) ततो भगवता जातानुकम्पेन कम्पेन रोमाञ्चेन च विलसद्देहं तं ब्राह्मणपाशं पाशं मृत्योरुपगतं लक्षीकृत्य निगदितम् ।

---

१. दन्तिवरस्यैरावतस्येव विक्रमः पराक्रमो यस्य तादृशश्चासौ विः पक्षी तेन क्रमो गतिर्यस्य तस्येव वैभवमित्यर्थः.　२. ब्राह्मणाधमम्.

भसे । किंतु तवास्य रोगस्योपशमोपाय एको वर्तते । तं चेदाचरसि तदा-यं गमिष्यति । नात्र संदेहः । देहोऽयं तव पूर्वतोऽपि समीचीन एव भवि-तुमर्हति' ।

**विरागः**—ततस्ततः ।

**भक्तिदेवी**—तदो बम्हणबन्धुणा पफुल्ललोअणेण गदिदम्—'देव, को सो उवाओ' । तदो पहुणा भणिदम्—'णिदंसणरूअं किंपि' । अये द्विज-बन्धो, बन्धोरखिलजगतां गतांहःसङ्घानां भगवतः प्रेमपरायणानां प्रधा-नतमोऽयमद्वैताचार्यः । अस्य चेत्पादोदकं पिबसि तदा पापकृतोऽयं गदो हेत्वभावे हेतुकाभाव इति दूरीभविष्यति । तदो बम्हणेण गदिदम्—'तुह दंसणादो ज्जेव गमिस्सदि । किं उण कधिदेण उवाअविशेषेणे' त्ति । तस्स प्पहावदो तधाकिदे सदि पुव्वदोवि समीचीणदेहो सो संवुत्तो ।(क)

**विरागः**—किं चित्रमिदं तस्य भगवतः । तत्कथय क्व गच्छन्तीच्छन्ती च किं तत्रभवती भवती, यत इयं च्छायामात्रसहचरी चरीकर्ति त्वराम् ।

**भक्तिदेवी**—अज्ज, अज्जउत्तो सिरिवासवासमज्झम्मि आअदेण अद्वै-अदेएण सद्धं किंपि णिव्विरहरहस्सवुत्तन्तं कुणन्तो वट्टदि । तं अणुसरिदुं तुवरेमि । (ख)

**विरागः**—भगवति, तृतीयप्रश्नस्योत्तरमवशिष्यते शिष्यतेयं भगवत्या मम । तदनुशाधि मां स किं मदाश्रयो भविताऽविता वा किं माम् ।

**भक्तिदेवी**—(संस्कृतेन ।) अथ किम् ।

आनन्दोऽपि च मूर्तो व्यापी च तथा परिच्छिन्नः ।
तद्वन्नित्यविलासोऽपि च वैराग्याश्रयो भगवान् ॥ २४ ॥

---

(क) ततो ब्राह्मणबन्धुना प्रफुल्ललोचनेन गदितम्—'देव, कोऽसावुपायः' । तदा प्रभुणा भणितम्—'निदर्शनरूपं किमपि' । ततो ब्राह्मणेन गदितम्—'तव दर्शनादेव गमिष्यति । किं पुनः कथितेन उपायविशेषेण' इति । तस्य प्रभाव-तस्तथाकृते सति पूर्वतोऽपि समीचीनदेहः स संवृत्तः ।

(ख)आर्य, आर्यपुत्रः श्रीवासवासमध्य आगतेनाद्वैतदेवेन सार्धं किमपि निर्वि-रहरहस्यवृत्तान्तं कुर्वन्वर्तते तमनुसर्तुं त्वरयामि ।

तदेहि। सहैव गच्छावः।

(इत्युभौ निष्क्रान्तौ।)

(ततः प्रविशत्यासनस्थो भगवान्विश्वंभरोऽद्वैताचार्यश्च परितः श्रीवासादयश्च।)

**भगवान्**—(सपरिहासमद्वैतं प्रति।)

'सीतापतिर्जयति लोकमलघ्नकीर्तिः।'

**अद्वैतः**—कुतोऽत्र रघुनाथो नाथो हि यदूनामयमुज्जृम्भते तत्र-भवान्भगवान्।

**भगवान्**—अद्वैत, तव विच्छेदच्छेदकर उपायो निरपायो निरवधि मया चिन्त्यते। येन निरन्तराया निरन्तरा सहवसतिः स्यात्।

**श्रीवासः**—देव, यद्यपि शान्तिपुरवास एवाद्वैतोपयोगी, तथापि नवानां भक्तीनां द्वीप इवेति **नवद्वीपे** चरणाविर्भावावधि अत्रैवाद्वैतपक्षपातः। तेन व्यापको नित्यानन्दश्चात्र।

**अद्वैतः**—अतोऽत्र श्रीवासः।

**श्रीवासः**—सा तु तिरोभूतेव।

**भगवान्**—श्रीविष्णुभक्तिः सा भवतु सत्यु वर्तत एव।

**अद्वैतः**—इदानीं सैव विष्णुप्रिया।

**भगवान्**—अथ किम्। सत्यु ज्ञानादिमार्गेषु भक्तिरेव विष्णोः प्रिया।

**अद्वैतः**—अतएव भगवानपि तामङ्गीचकार।

(नेपथ्ये।)

भो भोः, विश्वजनन्या शचीदेव्या निगद्यते—'अद्वैतस्यान्यत्र विश्रामस्थली न कार्या। ममैवालयो विश्रमणीयो मणीयोग इव स्वयं वृत्तः।'

**अद्वैतः**—(आकर्ण्य।)यथाज्ञापयति विश्वजननी। तदुच्यतां सहैवाद्य भोक्तव्यं भगवता विश्वंभरेण भरेण हर्षस्य मन्थरोयं मे देहः।

**श्रीवासः**—तन्ममापि मापितव्यं तत्र भोजनम्।

**भगवान्**—तर्हि परिश्रमोऽस्य महान्भविता वितानेन पाकस्य।

---

१. अस्य शचीदेव्याः. एतेनेश्वरसमीपे लिङ्गभेदो नास्तीति ध्वनितम्.

अद्वैतः—अस्येति किमुच्यते । अस्या इत्युच्यताम् । (इति कश्चिदात्मनीनं तत्र प्रेषयति । स चेङ्गितं बुद्ध्वा निष्क्रान्तः ।)

(अद्वैतः श्रीवासस्य कर्णे लगति ।)

भगवान्—किमाहाचार्य आर्यः ।

श्रीवासः—नित्यानन्देन देवस्य षड्भुजं रूपमवलोकितम् । तद्भवते दर्शनीयमिति स्वरूपदर्शनाय यदङ्गीकृतं मह्यं मह्यं तत्कथं न दर्श्यते भगवताऽवताऽदृष्टं मे कीदृशमिति ।

(नेपथ्ये ।)

भो भोः, षड्भुजं रूपमवलोकितम् ।

भगवान्—(सावहित्थम्[1] ।) मम स्वरूपमिदमेव । यदिदमद्वैतप्रेमपात्रम् ।

अद्वैतः—(स्वगतम् ।) किमत्र ब्रूमहे । महेच्छं प्रति यदि तवैतदेव स्वरूपं तदा दर्शनीयम् । श्यामसुन्दरविग्रहाभिलाषो विश्रान्तः । यदि स एव स्वरूपमित्युच्यते तदास्मिन्प्रेमहानिः । (इति क्षणं परामृशति ।)

श्रीवासः—अस्माकमिदमेव भवद्वपुः प्रेमपात्रमत्र कः संदेहः । किंतु स्वयमेवोक्तम्—'तद्भवते दर्शयिष्यामि' इति कृत्वासौ निवेदयति ।

भगवान्—उन्माददशायां केन किं न भण्यते ।

श्रीवासः—भगवन्, अन्योन्मादस्तु व्याधिरेव । अयं तु तवोन्मादो द्रष्टृश्रोतॄणामपि व्याधिनिर्मूलकः । किंच जीवस्तु वस्तुतः क्षुद्रानन्देनापि विलुप्तधीरधीर एव भवति । ईश्वरस्य त्वानन्दस्वरूपत्वाज्ज्ञानस्वरूपत्वाच्च किं केनापि बाध्यताम् । तेन स्वाधीनानन्दः स्वाधीनज्ञानश्चायम् ।

भगवान्—(सस्मितम् ।) तत्खलु मदधीनं न भवति यन्मया दर्शयिष्यते । स्वयमेव भावचक्षुषा दृश्यताम् । (इति तदन्तःकरणे स्वरूपमाविर्भावयति ।)

(अद्वैतश्चक्षुषी निमील्य प्रणिधानं नाटयति ।)

श्रीवासः—(चिरं निर्वर्ण्य ।) अहो चित्रम् । अद्वैतोऽद्वैतोपरि परिवर्तते । तथा हि ।

---

१. 'भयगौरवलज्जादेर्हर्षाद्याकारगोपनम्' इति साहित्यदर्पणलक्षणघटितावहित्थया सहितम्.

यद्बाह्येन्द्रियवृत्तयोऽस्य गलिताः स्वानन्दसान्द्रो लयः
　　कोऽप्यन्तःकरणस्य हन्त नितरां स्पन्देन मन्दं वपुः ।
आत्माप्येष लयं ययावनुभवास्वाद्ये परे वस्तुनि
　　प्रायोऽयं श्वसितीति बोधविषयं प्राप्नोति रोमोद्गमैः ॥ २५ ॥

**भगवान्**—एवमेव तदास्वादसंवादः ।

**श्रीवासः**—भगवन्, तवैव नाश्चमिदम् । बहिर्न दर्शितमस्माभिरपि न दृश्यते । इति भवत्वस्माकं तवैतदेव स्वरूपं महाधनम् । किंत्वधुना धुनातु भवान् । माऽतःपरं परं तप चेतोऽस्य तिरोधापयान्तःकरणतोऽस्य तद्रूपम् । अन्यथा समाधिसमा धिषणास्य न परं बहिश्चारिणी भविष्यति । पृच्छामश्चैतं किं दृष्टमिति ।

**भगवान्**—स्वयमेवासौ प्रबोध्यताम् । (इति तदन्तःकरणात्तद्रूपं तिरोधापयति ।)

(अद्वैतो हृदि स्फुरद्रूपं तत्किमप्यनालोकयन्सुप्तोत्थित इव चक्षुषी उन्मील्य क्षणं तदेव पश्यन्निव दशां कामप्यभिनयति ।)

**भगवान्**—अद्वैत, किमीक्ष्यते ।

**अद्वैतः**—(स्वप्नायमान इव ग्रहग्रस्त इव किमपि पठति ।)

　　अकस्मादुन्मीलन्नवकुवलयस्तोमसुरभि-
　　　　र्घनश्रेणीस्निग्धः स्तबकिततमालावलिघनः ।
　　प्ररोहन्नीलाश्मव्यतिकरविशेषोज्ज्वलतरो
　　　　महःपूरः कोऽयं नयनपदवीं चोरयति नः ॥ २६ ॥

अपि च ।

　　प्रश्यामचित्किरणमण्डलमध्यवर्ति-
　　　　प्रत्यङ्गकं मधुरिमामृतपूरपूर्णम् ।
　　वंशीकलक्वणितकेलिकलाविदग्ध-
　　　　माद्यं महो घनसहोदरमाविरास्ते ॥ २७ ॥

**श्रीवासः**—अहो, वर्तमानप्रयोगादतीतमपि प्रत्यक्षंमन्यमानोऽयं निगदति ।

**भगवान्**—आनन्दस्य वर्तमानत्वात् । तदाकर्णय । भूयोऽपि विवक्षुरयम् । सर्वे तूष्णीं तिष्ठन्तु ।

**अद्वैतः**—

सुश्यामदीर्घघनकुञ्चितकेशपाशं
सुभ्रूलतं सलकमुन्नतचारुनासम् ।
आलोलशोणविपुलायतनेत्रपद्मं
बन्धूकबान्धवसुरेखशुभाधरौष्ठम् ॥ २८ ॥

श्रीवत्सकौस्तुभरमासुपमासमेत-
वक्षःस्थलस्खलदुदारसुतारहारम् ।
आपादलम्बिवनमाल्यसुपाल्यमानं
सद्वृत्तदीर्घतरपीवरबाहुदण्डम् ॥ २९ ॥

**श्रीवासः**—कथमकस्मादस्यैवमभिनिवेशो जातः ।

**भगवान्**—श्रूयताम् ।

ध्यानाभ्यासकृता स्फूर्तिः स्फूर्तिः सा तु चिराद्भवेत् ।
याकस्मिकी हृदि हरेः सावतार इवापरः ॥ ३० ॥

**श्रीवासः**—एवमेव ।

'सकृद्यद्दर्शितं रूपमेतत्कामायतेऽनघ'

इति नारदस्य प्राग्जन्मनि दर्शितमित्यवतारसूचकम् । ध्रुवस्य त्वभ्यासकृता स्फूर्तिः । किंतु भगवन्, विना चिराभ्यासयोगेन कथं भगवत्प्रकाशयोग्यतान्तःकरणस्य ।

**भगवान्**—अवधेहि ।

पुरोऽनुग्रह एवास्य स्वोदयाधारधावनः ।
उदयात्पूर्वमर्कस्य विनिहन्ति तमोऽरुणः ॥ ३१ ॥

**श्रीवासः**—किमयमद्यापि साक्षादेव वीक्षते किं वेक्षितमनुवदति ।

**भगवान्**—पृच्छ्यताम् ।

**श्रीवासः**—(अद्वैतं प्रति ।) भो भो महानुभाव, किं पश्यसि किंवा दृष्टमनुवदसि ।

---

१. सूर्यसारथिः.

अद्वैतः—(आनन्दाम्बुनिस्थित इव किंचिद्बाह्यमवगाह्य।)

असाद्विभोर्बहिरुपेत्य महोऽतिनील-
मन्तर्ममाविशदहो क्षणतस्तिरोऽभूत्।
तेनातिदुःखितमना बहिराचदृष्टिः
पश्यामि तत्पुनरिहैव निमग्नमासीत् ॥ ३२ ॥

श्रीवासः—(सोल्लासम्।) भगवन्, फलितमस्मद्वचः।

भगवान्—तन्द्रादोषोऽयमस्य।

श्रीवासः—आनन्दतन्द्रा खल्वियम्। कुतोऽस्य दोषः।

भगवान्—(अद्वैतं प्रति।) अद्वैत, जाग्रत्स्वप्नोऽयं भवतः।

अद्वैतः—(साभ्यसूयमिव।)

नवकुवलयदामश्यामलो वामजङ्घा-
हिततदितरजङ्घः कोऽपि दिव्यः किशोरः।
त्वमिव स स इव त्वं गोचरो नैव भेदः
कथय कथमहो मे जाग्रतः स्वप्न एषः ॥ ३३ ॥

भगवान्—अद्वैत, तवैवायं वासनावगाही दोषः। यतस्त्वमेवैवं पश्यसि, नापरः कोऽपि।

श्रीवासः—क एवंविधभाग्यवानास्ते, यस्त्वां तथा पश्यतु।

भगवान्—(सोपहासम्।) श्रीवास, भवानप्यद्वैतपथपतितोऽभूत्।

श्रीवासः—कृष्णेन सह तवाद्वैतं यत्तत्पथपातिन एव वयम्। कोऽत्र संदेहः।

भगवान्—एवं चेद्भवतोऽपि तेन सहाद्वैतम्।

श्रीवासः—भगवन्, मैवं वादीः। त्वच्चरणारविन्दमकरन्दकणास्वादभाजां नैष पन्थाः।

भगवान्—तर्हि मयि कथं तदारोपयसि।

श्रीवासः—न हीदमारोपणं स्वभावोऽपि भावो नापह्नोतुं शक्यते।

---

१. जाग्रत्स्वप्नो हि—निद्रितस्येव विषयानुभवः. तल्लक्षणं यथाह दर्पणकारः—'स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः' इति.

किंतु नायमद्वैताचार्यस्य दोषः, अपि तु तवैव । यतस्त्वयोक्तम् 'तद्भवते दर्शयिष्ये' इति ।

(नेपथ्ये ।)

सत्यं सत्यम् ।

**श्रीवासः**—जितमस्माभिः, यदिदं दैववच इव नरेङ्गितमभूत् ।

(पुनस्तत्रैव ।)

अये, सत्यमेव शचीदेव्या कृतपाकक्रियया तनयेन सममद्वैतागमनं प्रतीक्ष्यते । गगनमध्यमध्यारूढश्चायं भगवान्मार्तण्डः ।

**श्रीवासः**—(श्रुतिमभिनीय ।) मातः परमत्र विलम्बनीयम् । भोः, कथय विश्वजनन्यै । एते वयं श्रीविश्वंभरेण सममद्वैतादयश्चलिताः ।

(इति सर्वे यथायथं निष्क्रामन्ति ।)

(इति निष्क्रान्ताः सर्वे ।)

इति सर्वावतारदर्शनो नाम द्वितीयोऽङ्कः ।

---

## तृतीयोऽङ्कः ।

(ततः प्रविशति मैत्री ।)

**मैत्री**—हद्धी हद्धी । पराणमेत्तउव्वरिओ जो एक्को अम्हवंसस्स कडम्बो विराओ जीवदित्ति सुदम्, तं ण आणे कहिं वट्टदि । अहं पि जंनाममेत्तेण जीवामि । मंपि सो ण आणेदि । ता उद्देसं करेमि । (इति परितो विलोक्य ।) अम्मो, का इयं पुरदो आअच्छदि । (क) (संस्कृतमाश्रित्य ।)

आनन्दमूर्तिरमृतद्रववत्समन्ता-
दङ्गप्रभां तत इतः सरसां किरन्ती ।

---

(क) हा धिक् हा धिक् । प्राणमात्रमुद्धृत्तो य एकोऽस्मद्वंशस्य कडम्बो विरागो जीवतीति श्रुतम्, तं न जाने कुत्र वर्तते । अहमपि यन्नाममात्रेण जीवामि । मामपि स न जानाति । तदुद्देशं करोमि । अहो, केयं पुरत आगच्छति ।

---

१. नरेङ्गितं हि—कस्यचित्प्रस्तावस्य कथासमकालं तदनुकूलं सहसोत्थितम्, अन्यार्थे प्रयुक्तं यद्वाक्यं तन्नरेङ्गितं भवति. अत्र च 'तद्भवते दर्शयिष्ये' त्दुक्तेनास्याद्वैतस्य वचनसंगतिप्रस्तावे नेपथ्योक्तस्य सत्यं सत्यमित्यस्यान्यार्थे प्रयुक्तानुकूलतया सहसोत्थितेर्नरेङ्गितत्वं ज्ञेयम्.

आसादयन्त्यतितरां करुणाकटाक्षै-
रन्तर्विशुद्धिमखिलस्य पुरोऽभ्युपैति ॥ १ ॥

(इति सविस्मयमालोकयति ।)

(ततः प्रविशति प्रेमभक्तिः ।)

**प्रेमभक्तिः**—(पुरोऽवलोक्य ।) अहो, केयम् ।

नामैकमात्रं वपुरादधाना विम्लानकान्तिः परितोषहीना ।
सोत्कण्ठमस्मन्मुखमीक्षमाणा शनैःशनैर्मत्पुरतोऽभ्युपैति ॥ २ ॥

**मैत्री**—(निपुणं निभाल्य ।) अम्महे, इयं ज्जेअ पेम्मभत्तीजननी कहिएण लच्छणेण लच्छीअदि । ता उपसप्पिअ पणमामि । (इत्युपसृत्य ।) देवि, वन्दिज्जसि मेत्तीणामधेआए मए । (क)

**प्रेमभक्तिः**—(सचमत्कारम् ।)कथं मैत्री त्वमसि । एहि वत्से, एहि । (इत्यालिङ्ग्य ।) मैत्रि, कथय कथमेकाकिनी दुरवस्थिता भ्रमसि ।

**मैत्री**—कलिपरिअणेहिं णिज्जिदेसु अम्हसपच्छेसु भअभेम्हलिदा जीविदं गेण्हिअ पलाइदा । अदो मे दुरवत्थं किं पुच्छसि । (ख)

**प्रेमभक्तिः**—वत्से, निर्भयमतः परं स्थीयतां मत्सङ्गेनैव । तव मातामहभगिन्यस्मि ।

**मैत्री**—कहं विअ । (ग)

**प्रेमभक्तिः**—आमूलमाकलय ।

भगवदनुग्रहनामा जनको भगवज्जनासक्तिः ।
जननी तयोस्तु समयेऽजनिषत भूरीण्यपत्यानि ॥ ३ ॥

अपि च ।

एको विवेकनामा तनयो बह्व्यस्तु भक्तिसंज्ञिकाः कन्याः ।
तस्य विवेकस्य मतेरनसूया नाम दुहितासीत् ॥ ४ ॥

---

(क) अहो, इयमेव प्रेमभक्तिजननी कथितेन लक्षणेन लक्ष्यते । तस्मादुपसर्प्य प्रणमामि । देवि, वन्द्यसे मैत्रीनामधेयया मया ।

(ख) कलिपरिजनैर्निर्जितेष्वस्मत्सपक्षेषु भयविह्वलिता जीवितं गृहीत्वा पलायिता । अतो मे दुरवस्थां किं पृच्छसि ।

(ग) कथमिव ।

अपि च ।

अनसूया समभावं पतिमासाद्य स्वभावजं शुद्धम् ।
मैत्रीमसूत पुत्रीं भवतीं मत्तोपसंधात्रीम् ॥ ५ ॥

अपि च ।

कन्यकाः सरसनीरसभावादाययुर्द्विविधतां प्रथमं ताः ।
नीरसास्तु बहुधा गुणयोगाद्भेजिरेऽथ दशतां रसभाजः ॥ ६ ॥
उज्ज्वलाद्भुतशमाश्च हसश्च प्रेम वत्सल इतीह रसाः षट् ।
उत्तमा इति तदाश्रयभाजो भक्तयश्च षडमूरतियोग्याः ॥ ७ ॥

**मैत्री**—चरमा हि पेम्मरसभत्ती । (क)

**प्रेमभक्तिः**—अथ किम् । तथा हि ।

सर्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ ।
उन्मज्जन्ति निमज्जन्ति यत्र स प्रेमसंज्ञकः ॥ ८ ॥
खण्डानन्दा रसाः सर्वे सोऽखण्डानन्द उच्यते ।
अखण्डे खण्डधर्मा हिं पृथक्पृथगिवासते ॥ ९ ॥

एष ते व्याख्यातो निजान्वयः ।

**मैत्री**—देवि, दाणीं तुमं एआइणी कहिं वच्चसि । (ख)

**प्रेमभक्तिः**—मैत्रि, अस्माकमाश्रयभूतस्य भगवतः कस्यापि श्रीविश्वंभरस्य विहितसर्वावतारलीलस्य संप्रति वृन्दावनेश्वरीभावमनुचिकीर्षोरनुज्ञया सकललोकस्य हृदयशोधनाय साधयामि ।

**मैत्री**—कहिं । (ग)

**प्रेमभक्तिः**—यत्र खलु तद्भावभावुकसुभगंभावुकतया सर्वभुवनप्रियंभावुकस्य तस्य तन्नृत्यानुकरणं भविष्यति ।

**मैत्री**—सो ज्जेव को पदेसो । (घ)

---

(क) चरमा हि प्रेमरसभक्तिः ।

(ख) देवि, इदानीं त्वमेकाकिनी कुत्र व्रजसि ।

(ग) कुत्र ।

(घ) स एव कः प्रदेशः ।

**प्रेमभक्तिः**—आचार्यरत्नस्य पुराङ्गणम् ।

**मैत्री**—कधं दाव ईसरो हुविअ इत्थीभावेण णच्चिस्सदि । (क)

**प्रेमभक्तिः**—बाले, न जानासि । ईश्वरः खलु सर्वरसः सर्वेषां भक्तानामाशयानुरोधाद्विचित्रामेव लीलां करोति । स्वस्ववासनानुसारेण भक्तास्तां तामनुकुर्वन्ति । अतः केषांचिन्निभृतानां भागवतानां चेतसि तद्भावमावेशयितुं सर्वोत्तमां तदनुकारलीलां करिष्यति । यतः परमन्यत्सरसं नास्ति ।

**मैत्री**—कधेहि तं णच्चं किं अङ्करूवं किंवा पइण्णअम् । (ख)

**प्रेमभक्तिः**—अङ्करूपमेव ।

**मैत्री**—कधेहि को कस्स भूमिअं गहिस्सदि । (ग)

---

(क) कथं तावदीश्वरो भूत्वा स्त्रीभावेन नर्तिष्यति ।

(ख) कथय तन्नृत्यं किमङ्करूपं किंवा परिणयम् ।

(ग) कथय कः कस्य भूमिकां ग्रहिष्यति ।

---

१. अङ्कलक्षणमिति भावः, तल्लक्षणं **दर्पणे** यथा—

'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥
विच्छिन्नावान्तरैकार्थः किंचित्संलग्नबिन्दुकः ।
युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् ।
आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥
नानेकदिननिर्वर्त्यकथया संप्रयोजितः ।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्युपरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥' इति.

२. वेषमित्यर्थः.

**प्रेमभक्तिः**—वत्से, अवधारय । अद्वैतस्य रुद्रत्वेनात्मत्वं स्वस्य च श्रीराधास्वरूपग्रहणमन्यजनाशक्यं परमरहस्यत्वेनायोग्यं च मत्वा ।

अद्वैतमापादयदीशवेशं स्वयं च राधाकृतिमग्रहीत्सः ।
इति प्रतीतिः किल वस्तुतस्तु स एव देवो द्विविधो बभूव ॥ १० ॥

अद्वैतो वेशमात्रेण केवलं चरितार्थताम् ।
अगमत्किंतु तत्रासीदाविर्भूतः स्वयं हरिः ॥ ११ ॥

अपि च ।

हरिदासः सूत्रधारो मुकुन्दः पारिपार्श्वकः ।
वासुदेवाचार्यनामा नेपथ्यरचनाकरः ॥ १२ ॥
श्रीराधाकृष्णसंयोगकारिणी जरतीव सा ।
योगमाया भगवती नित्यानन्दतनुं श्रिता ॥ १३ ॥

**मैत्री**—सामाइआओ केऽमी । (क)

**प्रेमभक्तिः**—अधिकारिणो ये अस्मिन्नर्थे स्वयमेव भगवानवादीत्प्रागेव । यथा—

'हे **श्रीवास** स्वयमवहितेनाद्य भाव्यं त्वयास्मि-
न्योग्यो यः स्यात्स विशति यथा नापरस्तद्विधेयम् ।'

इत्यर्धोक्ते **श्रीवासे**णाभाणि—'देव, कस्मिन्कर्मणि योग्यायोग्यव्यवस्था करणीया । कुत्र वा प्रवेशः कारयितव्यः' इति । पुनर्देवेनाप्यवादि—

'श्रीराधात्र स्वयमियमहो नूनमाचार्यरत्न-
स्यावासस्याङ्गणभुवि रसाद्व्यक्तमाविर्भवित्री ॥ १४ ॥'

**मैत्री**—तदो तदो । (ख)

**प्रेमभक्तिः**—ततः **श्रीवासे**न मनसि संदिहानेन भगवद्वच इति विहितनिश्चयेनापि **गङ्गादास**नामा भगवतः परमाप्तो भूसुरवरो द्वारपालत्वेन न्ययोजि ।

---

(क) सामाजिकाः के अमी ।
(ख) ततस्ततः ।

मैत्री—तदो तदो। (क)

प्रेमभक्तिः—भगवता पुनरपि श्रीवासो निजगदे—'श्रीवास, भवता नारदेन भवितव्यम्। शुक्लाम्बरेण तव स्नातकेन भाव्यम्। गाथकाः श्रीरामादयस्तव सहोदरास्त्रयः। आचार्यरत्नविद्यानिधी चेति देवेनैव नियोजिताः अतः परं न केषामपि तत्र प्रवेशः। किंतु श्रीवासादिसहोदरवधूभिः सहाचार्यरत्नमुरारिवधूप्रभृतयः प्रागेव तत्र प्रविश्य स्थिता अधिकारभाजश्च ताः।

(नेपथ्ये मृदङ्गतालादिध्वनिः।)

प्रेमभक्तिः—वत्से, श्रुतम्। अयमारब्धः पूर्वरङ्गाङ्गभूतः प्रत्याहारः।

(पुनर्नेपथ्ये।)

जयति जननिवासो देवकीजन्मवादो
यदुवरपरिषत्स्वैर्दोर्भिरस्यन्नधर्मम्।
स्थिरचरवृजिनघ्नः सुस्मितश्रीमुखेन
व्रजपुरवनितानां वर्धयन्कामदेवम्॥ १५॥

अपि च।

संपूर्णेन्दुमुखी सरोजनयना कोकस्तनी कैरव-
स्मेराया कम्बुशिरोधिरम्बुधिभुवो गर्वस्य सर्वंकषा।
मङ्गल्यैरिह वस्तुभिर्विरचिता नान्दीव वृन्दावन-
क्रीडाकौतुकनाटकस्य दिशतु श्रीराधिका वः शुभम्॥१६॥

प्रेमभक्तिः—सत्यमेवैतत्। यन्निरटङ्कि मया। यदसौ सूत्रधारभूमिको हरिदासः श्रीभागवतपद्यं मङ्गलं कुर्वन्नान्दीं पपाठ, तन्मन्ये एकाङ्को भाणो व्यायोगो वा रूपकमत्र निरूपयितव्यमनेन। यतः 'नेपथ्ये गीयते नान्दी' इत्यादि तयोर्लक्षणम्। तद्वत्से, तवास्य दिदृक्षा वर्तते।

(क) ततस्ततः।

१. गृहस्थमिदा. २. पूर्वरङ्गस्यामिनयात्पूर्वं रङ्गविघ्नोपशान्त्यर्थं क्रियमाणं माङ्गलिकमनुष्टानम्, तल्लक्षणं यथा **दर्पणे**—

'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति **पूर्वरङ्गः** स उच्यते॥' इति

३. स्तुतिविशेषः.

**मैत्री**—कहिं मे तारिसं भाअधेअम् । (क)

**प्रेमभक्तिः**—का ते चिन्ता । मया सह वर्तितव्यम् । मत्प्रभावात्केनापि भवती न लक्षणीया । त्वदनुरोधान्मयापि त्वन्निकट एव तथा भूत्वा स्थातव्यम् ।

**मैत्री**—अणुगहीदम्हि । (ख)

**प्रेमभक्तिः**—तदेहि ।

(इति निष्क्रान्ते ।)

**इति प्रवेशकः ।**

(ततः प्रविशति गृहीतसूत्रधारभूमिको **हरिदासः** । कियद्दूरे उपविष्टे अलक्षिताकारे **प्रेमभक्ति-मैत्र्यौ** च ।)

**सूत्रधारः**—(पुष्पाञ्जलिमञ्जलौ कृत्वा ।)

भासा भास्वरयन्दिशो विशदया कान्तिं द्विजश्रेणिजां
बिभ्राणः परितो लसत्परिमलः प्रोद्दामसंतोषभूः ।
शुद्धः पादसरोरुहे भगवतः पुष्टिं नखेन्दुश्रियां
तन्वन्हास इवैष नाट्यरहसः पुष्पाञ्जलिः कीर्यते ॥ १७ ॥

(इति तथा करोति ।)

**प्रेमभक्तिः**—(निर्वर्ण्य ।) सुविहितमेव विहितं भवता । यद्यपि नेपथ्य एव नान्दी पठिता तथापि रङ्गपूजाप्रसङ्गेन भगवत्पद एव पुष्पाञ्जलिः कीर्णः । पश्य वत्से, पश्य ।

हारी कण्ठे श्रवणयुगले कुण्डली चावतंसी
स्रग्वी भूयस्युरसि भुजयोरङ्गदी कङ्कणी च ।
अप्युष्णीषी शिरसि पदयोर्नूपुरी नाट्यलक्ष्म्या
मूर्तस्तेजोभर इव पुरो हारिदासप्रतीकः ॥ १८ ॥

**मैत्री**—देवि, ण क्खु अअं सत्थीओ मग्गो । (ग)

---

(क) कदा मे तादृशं भागधेयम् ।
(ख) अनुगृहीतास्मि ।
(ग) देवि, न खल्वयं शास्त्रीयो मार्गः ।

प्रेमभक्तिः—श्रूयताम् ।

शास्त्रीयः खलु मार्गः पृथगनुरागस्य मार्गोऽन्यः ।
प्रथमोऽर्हति सनियमतामनियमतामन्तिमो भजते ॥ १९ ॥

मैत्री—अणिअदमग्गेण चलन्तस्स विलम्बेण ज्जेव गम्मलाहो होइ । (क)

प्रेमभक्तिः—इदमनैकान्तिकम् । तथा हि ।

वन्यासु तरणिसरणिर्जवेन गम्यं नयत्यनियतापि ।
न सहजकुटिलेषु पुनर्नदीप्रवाहेष्वतिनियतापि ॥ २० ॥

तदलमनया वार्तया । शृणुमस्तावत्किमयं प्रस्तौति ।

सूत्रधारः—अलमतिविस्तरेण । भो भोः, अद्याहं भगवतः कमलयोनेश्चरणोपकण्ठाद्दैनंदिनवन्दनादिकं निर्वाह्य निवर्तमानो मानोन्नतेन दैवात्तत्रैवोपसीदता नारदेनादरेण समादिष्टोऽस्मि । यथा—'हंहो गन्धर्वराज, राजमानोऽतिचिराय मम मनोरथो वरीवर्ति । भवद्भिर्नरीनृत्यमाना भगवतः श्रीवृन्दावनविहारिणः कापि केलिकौमुदी नयनविषयीकर्तव्येति । तद्यथा संपद्यतेऽद्य ते तथा कौशलेन भवितव्यम्' । तदहं तत्र यतिष्ये । (इति पुरतोऽवलोक्य ।) भो भोः, इत इतः ।

(प्रविश्य ।)

पारिपार्श्वकः—किमाज्ञापयसि भाव ।

सूत्रधारः—मारिष, अद्याहमुपरोधितोऽस्मि तत्रभवता भगवता नारदेन ।

पारिपार्श्वकः—कथमिव ।

सूत्रधारः—'भगवतः कमलयोनेः–' (इत्यादि पठति ।)

पारिपार्श्वकः—भाव, कथमयमात्मयोनेर्भगवत आत्मजः सनकसनन्दनादीनामवरज आत्मारामो ब्रह्मभूतः सततब्रह्मानन्दानुभवभविकसुभगंभावुकः श्रीकृष्णस्य लौकिकीं केलिमनुबद्धतृष्णस्त्वामिदमभ्यर्थितवान् ।

सूत्रधारः—अस्ति रहस्यम् ।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥ २१ ॥

इति भागवतीया गाथा ।

---

(क) अनियतमार्गेण चलतो विलम्बेनैव गम्यलाभो भवति ।

**पारिपार्श्वकः**—भवतु नाम । भक्तिं कुर्वन्तु । कथं लौकिकाचरितेऽनुरज्यन्ति ।

**सूत्रधारः**—मैवं वादीः ।

अलौकिकीतः किल लौकिकीयं लीला हरेरेति रसायनत्वम् ।
लीलावतारानुकथातिमृद्वी विश्वस्य सृष्ट्यादिकथापलिन्नी ॥ २२ ॥

अत उक्तम्—

'भजते तादृशीः क्रीडा याः श्रुत्वा तत्परो भवेत् ।'

इति साधारणजनपरमेव । विशेषतस्त्वयं श्रीनारदो वृन्दावनविनोदप्रियः श्रीगोपालमहामनोर्ऋषिरपि[1] । तेन युक्तमेवैतत् । तदविलम्बितमेव संपद्यतां पात्रवर्गस्य[2] भूमिकापरिग्रहः[3] ।

**पारिपार्श्वकः**—भाव, क्षणमपेक्ष्यतां यावदसौ मुनिवरः समायाति ।

**सूत्रधारः**—आगतप्राय एव । न खलु तादृशामन्तरीक्षचारिणां पर्यटनविलम्बः ।

**पारिपार्श्वकः**—एवं चेत्कः प्रयोगोऽनुष्ठातव्यः । तदप्यनुज्ञायताम् ।

**सूत्रधारः**—

गृहीत्वा जरतीभावं या देव्या योगमायया ।
संपद्यते दानलीला सैव राधामुकुन्दयोः ॥ २३ ॥

**पारिपार्श्वकः**—कथमेषा त्वरितं संपादयितुं शक्यते ।

**सूत्रधारः**—कथमिव ।

**पारिपार्श्वकः**—श्रूयताम्—

तस्मिन्प्रयोगे भवतस्तनूजाः सर्वा विशेषाद्गणनाप्रवीणाः ।

**सूत्रधारः**—(साशङ्कम्,) कथय तासां स्वस्त्यस्ति ।

**पारिपार्श्वकः**—स्वस्त्येव । किंतु

वृन्दावनं ताः प्रययुः प्रमोदात्संभूय गोपीश्वरपूजनार्थम् ॥ २४ ॥

**सूत्रधारः**—किं करोमि । कथमेतन्नारदः प्रत्येतु । अहो, तदभिशापाद्भयेन भाव्यम् ।

---

१. श्रीगोपालस्य श्रीकृष्णचन्द्रस्य महामनोर्महामन्त्रस्य ऋषिः सततजापकः. २. नटगणस्य. ३. नेपथ्यग्रहणम्.

पारिपार्श्वकः—अलमलं चिन्तया । ता अपि समागतप्राया एव ।

सूत्रधारः—हन्त मारिष, न जानासि ।

वर्त्मानभिज्ञाः किल ताः कुमार्यो न चोपयुक्तः कतमोऽस्ति बन्धुः ।
दानद्रवोत्सिक्तकरः करालस्तम्बेरमो यत्र समेघधामा ॥ २५ ॥

पारिपार्श्वकः—भाव, अस्ति तासां सङ्गे योगमायाप्रभावा जरती भवच्छ्वश्रूः ।

सूत्रधारः—(विहस्य ।) तदा निश्चिन्त एवास्मि ।

या न पश्यति पन्थानं न शृणोति च या वचः ।
सा किं करोतु साहाय्यं या जरेव शरीरिणी ॥ २६ ॥

पारिपार्श्वकः—मैवं वादीः ।

महाप्रभावा खलु योगिनी सा वयो न तस्या मतिविप्लवाय ।
क्रमेण वृद्धा विधुमण्डलीयं न ग्लायति द्योतत एव कामम् ॥ २७ ॥

(नेपथ्ये ।)

हंहो गन्धर्वपते, को विलम्बस्तदभिनयस्य ।

सूत्रधारः—(श्रुतिमभिनीय ।) मारिष, पश्यायमुत्कण्ठमानो मुनिवरः सप्रमोदमभिनेष्यमाणविलोकनार्थं त्वरमाण आगच्छति । अस्माकं तु न कापि सामग्री संपद्यते । तद्वयमितो गत्वा तासामेव कुमारीणामनुसंधानाय यामः ।

पारिपार्श्वकः—यथा रुचितं भवते ।

(इति क्षणं नर्तित्वा निष्क्रान्तौ ।)

**इति प्रस्तावना ।**

(ततः प्रविशति स्नातकेनानुगम्यमानो नारदः ।)

नारदः—अये गन्धर्वराज, किमपरं विलम्बसे । (इति तमनुसंदधाति ।)

प्रेमभक्तिः—वत्से मैत्रि, पश्य पश्य ।

अंसे निधाय महतीं रणयन्प्रकोष्ठे वामेतरे वलयवत्कलिताक्षमालः ।
विशुद्धिकस्वरविकीर्णजटाकलापः कैलासकान्तिरयमेति सुरर्षिरग्रे ॥२८॥

वत्से, प्रणमैनम् । महाभागवतोत्तमोऽयं मुनिवरः । यस्य खल्वियं गाथा—

अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः।
गायन्माद्यन्निदं तन्त्र्या रमयत्यातुरं जगत्॥ २९॥

**मैत्री**—(प्रणम्य।) देवि, तुए भणिदम्, सिरिवासो णारदो हुविस्सदि। कहं दाणिं सअं ज्जेव णारदो आअओ। (क)

**प्रेमभक्तिः**—अस्य सहजनारदावेशत्वान्नारदरूपता व्यक्तैव। अद्वैतादेस्तु तत्तदारोपः। तत्त्वया यथादृष्टमेव प्रतीयताम्।

**नारदः**—भो भोः स्नातक, कथमत्र कोऽपि न दृश्यते।

**स्नातकः**—सुरर्षे, गन्धर्वराजस्तु वृन्दावन एव नर्तितव्यमिति तत्रैव ससामग्रीको गतवानस्ति। एहि। तत्रैव गच्छावः।

**नारदः**—इदं वृन्दावनं न भवति।

**स्नातकः**—भो महात्मन्, अतिशयहर्षोत्कर्षेण स्वात्मापि विस्मृतो भवता। यच्च तथा वृन्दावनपरिचयचातुर्यधुर्योऽपि वृन्दावनं न परिचिनोषि।

**नारदः**—भोः स्नातक, सत्यमेवोक्तं भवता।

आनन्दोन्मादलुप्तान्तर्बहिष्करणवृत्तयः।
परिचिन्वन्तु के सम्यगात्मानं किमुतापरम्॥ ३०॥

तदादिश तस्य पन्थानम्।

**स्नातकः**—भोः, इत इतः।

(इत्युभौ नाट्येन परिक्रामतः।)

**प्रेमभक्तिः**—(निरूप्य।) अहो महाभागवतस्य नैसर्गिकी वृन्दावनरतिः।

**नारदः**—(नाट्येन कियद्दूरं गत्वा।) हन्त भोः,

यत्पारे विरजं विराजि परमव्योमेति यद्गीयते
नित्यं चिन्मयभूमिचिन्मयलताकुञ्जादिभिर्मञ्जुलम्।
सान्द्रानन्दमहोर्मयैः खगमृगव्रातैर्वृतं सर्वत-
स्तद्वृन्दावनमीक्ष्यते किमपरं संभाव्यमक्ष्णोः फलम्॥ ३१॥

---

(क) देवि, त्वया भणितम्, श्रीवासो नारदो भविष्यति। कथमिदानीं स्वयमेव नारद आगतः।

यत्र स्वयं स्वयंभूरप्यत्यल्पिता यत्किंचिदेव जन्माभिलषितवान्। तथा च पौराणिकी गाथा—

'तद्भूरिभाग्यमिह जन्म किमप्यटव्यां
यद्गोकुलेऽपि कतमाङ्घ्रिरजोऽभिषेकम्।'

इत्यादि। (इत्येतदेव पद्यमुपवीणयन्नटति।)

स्नातकः—एवं चेत्प्रतिपदमेव भवता प्रेमानन्दविह्वलेन भूयते तदा कथं गम्यताम्।

नारदः—(धैर्यमवष्टभ्य।) आदिश मार्गम्।

स्नातकः—इत इतः।

(इत्युभौ पुनर्नाट्येन परिक्रामतः।)

(नेपथ्ये मुरलीध्वनिः।)

स्नातकः—देवर्षे, इदमेव वृन्दावनम्। यदेष भगवतो मुरलीकल आकर्ण्यते।

नारदः—(श्रुतिमभिनीय।) अये, सत्यमेवात्थ। तथा हि।

मधुरिमरसवापीमत्तहंसीप्रजल्पः
प्रणयकुसुमवाटीभृङ्गसंगीतघोषः।
सुरतसमरभेरीभांकृतिः पूतनारे-
र्जयति हृदयदंशी कोऽपि वंशीनिनादः॥ ३२॥

प्रेमभक्तिः—वत्से, भगवतः श्रीकृष्णचन्द्रस्य प्रवेशो भविता। तदिदानीं विसार्यतामाजन्मदुःखम्। सफलीक्रियतां च नयने।

मैत्री—सव्वं तुह चरणपसादादो ज्जेव। (क)

नारदः—(निपुणं निभाल्य।)

स्नातकः—सत्यमेव व्रजराजकुमारस्यैव वंशीनिनादोऽयम्। यतः।

विततिरपि गिरीणां मुञ्चतीवाश्रुधारां
पुलकयति तरूणां वीरुधां चैप वर्गम्।

(क) सर्वं तव चरणप्रसादादेव।

१. हृदयाकर्षी.

विदधति सरितोऽपि स्रोतसः स्तम्भमुच्चै-
हरिहरि[1] हरिवंशीनाद एवोज्जिहीते ॥ ३३ ॥

( इत्येतदेव पद्यं पूर्ववदुपवीणयन्नृत्यति । )

**स्नातकः**—यथार्थमेवैतन्नटनम् । यतः ।

श्रुतिभिरपि विमृग्यं ब्रह्मसंपत्तिभाजा-
मपि पुरु रसनीयं मूर्त आनन्दसारः ।
यदहह भविताद्य श्रीलशंभुस्वयंभू-
प्रभृतिभिरभिवन्द्यं पादपद्मं दृशोर्नः ॥ ३४ ॥

तद्देवर्षे, क्षणमपवार्य स्थातुं युज्यते । किमसौ सहचरैरेवोपसर्पति, किंवा सौभाग्यरसगभीराभिराभीरभीरुभिरिति सहसोपसर्पणमसांप्रतम् ।

**नारदः**—सत्यमात्थ । तदेवमेव कुर्वः ।

( इति तथा स्थितौ । )

(ततः प्रविशति कदम्बतरुकाण्डकृतालम्बस्त्रिभङ्गीललितो मुरलीं वादयन्कतिपयैः सखिभिः सह श्रीकृष्णः ।)

**श्रीकृष्णः**—सखे, रम्यमिदं वृन्दावनस्य सौभाग्यम् । तथा हि ।

हसन्ती वासन्ती, वलितमुकुलो बालबकुलो,
विशोकश्चाशोकः, सुलभविचयश्चम्पकचयः ।
अनागः पुंनागः, स्तबककमनः पश्य सुमनः-
कुटीरः, पाटीरश्वसनसुरभिर्भाति सुरभिः ॥ ३५ ॥

**वयस्यः**—भो वअस्स, तुज्झ एदं कीलाकाणणं कधं रमणिज्जं ण हुविस्सदि । (क)

**प्रेमभक्तिः**—( निर्वर्ण्य । ) अहो, किमेतत् ।

अयं नैवाद्वैतो बत न तदिदं वेशरचना-
कलाशिल्पं किंतु स्वयमिह हरिः प्रादुरभवत् ।
यथार्थं वस्त्वेव प्रथयति चमत्कारमधिकं
यथार्थस्याकारः सुखयति च संदेहयति च ॥ ३६ ॥

---

(क) भो वयस्य, तवेदं क्रीडाकाननं कथं रमणीयं न भविष्यति ।

---

१. हरिहरीति हर्षसूचकमव्ययम्.

( पुनर्निभाल्य सपरामर्शम्। )

अकृष्णः कृष्णत्वं व्रजितुमसमर्थो हि भवति
　स्वयं कृष्णो नानाकृतिकृतिसमर्थोऽपि भवति।
ग्रहीतुं योग्यः स्यादवयवकलापं ह्यवयवी
　कथंकारं धत्तामवयवविशेषोऽवयविताम्॥ ३७॥

तदयमद्वैत एव न भवति। नापि वेशरचनाकौशलम्। किंतु स्वयं कृष्ण एवावतीर्णः।

नारदः—( दूरादभिभाल्य सानन्दम्। ) अहो, किमेतत्।

सान्द्रानन्दरसाब्धिमन्थविदितं सद्भक्तगोष्ठ्यां कृपा-
　मोहिन्या परिवेषितं रतिमतां वृन्देन तत्राभितः।
नानारुच्यनुपानतः प्रतिमुहुः पीतं च पूर्णं सदा
　नो जीर्यत्यपि नोपयाति विकृतिं श्यामामृतं किंचन॥ ३८॥

अपि च।

नवजलधरधामा कोटिकामाभिरामः
　परिणतशरदिन्दुस्निग्धमुग्धाननश्रीः।
नवकमलपलाशद्रोणिदीर्घारुणाक्षो
　दशनकुसुमकान्तिश्रान्तबिम्बाधरौष्ठः॥ ३९॥

इत एवाभिसर्पति। तदेहि। कुञ्जान्तरितो भूत्वा पश्यावः।

स्नातकः—एवमेव।

( इति तथा कुरुतः। )

श्रीकृष्णः—सखे सुबल, सखे श्रीदामन्, सखे सुदामन्, कुसुमासवो नाम बटुः प्रियसखो मे कथं न दृश्यते। तदेतं मृगयत।

सखायः—यथाज्ञं मृगयाम।

( इति तदन्वेषणं नाटयन्ति। )

( प्रविश्यापटीक्षेपेण संभ्रान्तो विदूषकः। )

विदूषकः—भो वअस्स, परित्ताहि परित्ताहि। (क)

---

(क) भो वयस्य, परित्राहि परित्राहि।

**श्रीकृष्णः**—कथं भीत इव लक्ष्यसे ।

**विदूषकः**—वअस्स, एआ जोइणी जरदीव्व दीसमाणा दैवोपसण्णललिदबालललणाओ पञ्चसाओ वणमज्झम्हि आणिअ गोवीसरपूअणत्थं किदारम्भा दिट्ठा । तुह पुण्णेण अहं उव्वरिओ । मं गहिअ णूणं बलिं दास्सदि त्ति मे भअं जादम् । (क)

**श्रीकृष्णः**—( विहस्य । ) वयस्य सुबल, किमेतत् ।

**सुबलः**—ज्ञातमिहस्थेनैव मया—अद्य खलु गोपीश्वरपूजनकृते गुरुजनकृते गुरुनिवारणेऽपि मातामह्या मह्याऽचरणया बलतो बलतो हर्षोत्कर्षतः स्वच्छन्दतो वनगमनाय प्रवर्तयिष्यते राधा । तत्र तामेव जरतीमालोक्य योगिनीभ्रान्त्यायं बटुर्बिभाय । विभाऽयता हि सा स्वभावादेव देवमायेव ।

**विदूषकः**—ही ही, जइवि एव्वं तहवि पिअवअस्सहत्थे णिपडिस्सन्ति सव्वाओ । जं गोउलवासिणीणं इत्थीकुरङ्गिणं रङ्गिणं क्खु पिअवअस्सस्स गुणगणो वाउराजालो । (ख)

**नारदः**—भोः स्नातक, अतःपरमत्रावस्थातुं न युज्यते । तदेहि । योगप्रभावेण नभश्चरौ भूत्वा पश्यावः ।

( इति निष्क्रान्तौ । )

( नेपथ्ये । )

हन्त अज्जे, केण पहेण गोवीसरं अणुसरेम्म । जदो ।

विरइअ ठाणे ठाणे दाणं सो वणगओ धूत्तो ।
कड्डइ सदालिवग्गं हेलाकण्डूलकरदण्डो ॥ ४० ॥ (ग)

---

(क) वयस्य, एका योगिनी जरतीव दृश्यमाना दैवोपसन्नललितबालललना पञ्चषा वनमध्य आनीय गोपीश्वरपूजनार्थं कृतारम्भा दृष्टा । तव पुण्येनाहमुद्धृतः । मां गृहीत्वा नूनं बलिं दास्यतीति मे भयं जातम् ।

(ख) ही ही, यद्यप्येवं तथापि प्रियवयस्यहस्ते निपतिष्यन्ति सर्वाः । यतो गोकुलवासिनीनां स्त्रीकुरङ्गिणीनां रङ्गिणीनां खलु प्रियवयस्यस्य गुणगणो वागुराजालः ।

(ग) हन्त आर्ये, केन पथा गोपीश्वरमनुसरामः । यतः ।

विरचय्य स्थाने स्थाने दानं स वनगजो धूर्तः ।
कर्षति सदालिवर्गं हेलाकण्डूलकरदण्डः ॥

सुबलः—वयस्य, फलितमस्मद्वचः ।

कुसुमासवः—मए जं उत्तं वअणं तं किं ण फलिस्सदि । ता अलीअं ज्जेव गव्वमुव्वहसि । (कृष्णं प्रति ।) वअस्स, तुम्हेवि तेण उज्जमेण चिट्ठध । (क)

श्रीकृष्णः—कोऽसावुद्यमः ।

कुसुमासवः—ण सुदं 'विरइअ ठाणे ठाणे'–(३।४०) इत्यादि जं पढिदम् । किंतु 'वणगओ' (३।४०) त्ति जं भणिदं तं उइदं ज्जेव । 'धुत्तो' (३।४०) त्ति जं भणिदं तं क्खु मे दुक्खाअरम् । (ख)

श्रीकृष्णः—(विहस्य सावहित्थम् ।) 'वनगजो धूर्तः' (३।४०) इति कथं ते दुःखाक्षरम् ।

कुसुमासवः—एत्थ वणे को अवरो वणगओ । (ग)

(पुनर्नेपथ्ये ।)

अवगाहिअ उण मग्गं सो विविणे सहअरेहिं कलहेहिं ।
विहरइ दाणविणोई हन्त कधं तत्थ गन्तव्वम् ॥ ४१ ॥ (घ)

कुसुमासवः—वअस्स, अम्हे क्खणं कुञ्जे ओवारिअ चिट्ठम्ह । जाव इमाओ वि विस्सत्था हुविअ इध आअच्छन्ति । (ङ)

सर्वे—एवमेव । (इति श्रीकृष्णेन सह कुञ्जप्रवेशं नाटयन्ति ।)

(ततः प्रविशति पूजोपकरणपात्रपाणिभिः सह सहचरीभिर्जरत्योपगम्यमाना पाण्डुपत्रावृता नवकिसलयश्रीरिव श्रीराधा ।)

राधा—सहीओ, गोवीसरपूअणत्थं सव्वो ज्जेव संभारो आणीदो । (च)

---

(क) मया यदुक्तं वचनं तत्किं न फलिष्यति । तदलीकमेव गर्वमुद्वहसि । वयस्य, यूयमपि तेनोद्यमेन तिष्ठत ।

(ख) न श्रुतं 'विचरय्य स्थाने स्थाने' इत्यादि यत्पठितम् । किंतु 'वनगजः' इति यद्भणितं तदुचितमेव । 'धूर्तः' इति यद्भणितं तत्खलु मे दुःखाक्षरम् ।

(ग) अत्र वने कोऽपरो वनगजः ।

(घ) अवगाह्य पुनर्मार्गं स विपिने सहचरैः कलभैः ।
विहरति दानविनोदी हन्त कथं तत्र गन्तव्यम् ॥

(ङ) वयस्य, वयं क्षणं कुञ्जेऽपवार्य तिष्ठाम । यावदिमा अपि विश्वस्ता भूत्वेत आगच्छन्ति ।

(च) सख्यः, गोपीश्वरपूजनार्थं सर्व एव संभार आनीतः ।

सख्यः—अध इं । किंतु मिलाणं हुविस्सदित्ति कुसुमं ज्जेव ण आहरिदम् । इदो ज्जेव अवचिणिस्सम् । (क)

राधा—पिअं मे पिअं मे । ता एहि । अवचिणम्ह । (ख)

(इति नाट्येन पुष्पावचयनं नाटयन्ति ।)

प्रेमभक्तिः—(निर्वर्ण्य ।) अहो चित्रम् । स एवायं देवः । नास्य किमप्यशक्यम् । यतः ।

मोहिन्येष बभूव यः स्वकलया देवद्विषो मोहय-
न्नात्मारामपीश्वरेश्वरमपि श्रीशंकरं लोभयन् ।
तस्याश्चर्यमिदं न किंचिदपि यत्कृष्णावतारोऽपि स-
ञ्श्रीराधाकृतिमग्रहीत्स्ववपुषा देवः स विश्वंभरः ॥ ४२ ॥

अथवा ।

हरिरयमथ लीलया स्वशक्त्या विदलयुगात्मकलायवन्न भिन्नः ।
अभवदिव पृथक्पुमान्वधूश्च स्वयमुभयांशसमानरूपयोगात् ॥ ४३ ॥

(पुनरन्यतोऽवलोक्य ।)

इयमपि ललितैव राधिकाली खलु न गदाधर एष भूसुरेन्द्रः ।
हरिरयमथवा स्वयैव शक्त्या त्रितयमभूत्स सखी च राधिका च ॥ ४४ ॥

(पुनरन्यतोऽवलोक्य ।) अहो, इयमपि योग[1]मायाऽगमायादशमिनी [2]शमिनी [3]नीरजा नीरजाक्षी धवलबलता केशपाशेन तम इव शुद्धसत्त्वीकृत्य दधाना जरतीवेशं विधाय प्रविष्टा । नेयं नित्यानन्दतनुः । नित्यानन्दतनुर्भगवान्हि स्वामेव योगमायामायापयामास । तस्य तु न चित्रमेतत् । यतः ।

'निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिः ।
शरीरभेदैस्तव शेषतां गतैर्यथोचितं शेष इतीरितो जनैः ॥ ४५ ॥'

इति प्राचीनैर्भक्तैरुक्तम् ।

---

(क) अथ किम् । किंतु म्लानं भविष्यतीति कुसुममेव नाहृतम् । इत एवावचयिष्यामः ।

(ख) प्रियं मे प्रियं मे । तदेहि । अवचयाम ।

---

१. न गच्छतीति अगा, या मायाऽविद्या तया द्यति पीडयति लोकानित्यगमायादः संसारस्तस्य शमिनी शान्तिकर्त्रीत्यर्थः. २. शमगुणवती. ३. रजोगुणातीता.

**श्रीकृष्णः**—( राधां निर्वर्ण्य । ) सखे,

उत्कीर्णा किमु चारु कारुपतिना कामेन किं चित्रिता
प्रेम्णा चित्रकरेण किं लवणिमा स्वष्ट्रेव कुन्दे धृता ।
सौन्दर्याम्बुधिमन्थनात्किमुदिता माधुर्यलक्ष्मीरियं
वैचित्र्यं जनयत्यहो अहरहर्दृष्टाप्यदृष्टेव मे ॥ ४६ ॥

अथवा ।

शौटीर्यं स्मरभूपतेर्मधुमदो लावण्यलक्ष्म्याः स्मयः
सौभाग्यस्य विनोदभूर्मधुरिमोल्लासस्य हासश्रियः ।
अद्वैतं गुणसंपदामुपनिषत्केली विलासावलेः
केयं लोचनचन्द्रिकाचयचमत्कारश्चकोरेक्षणा ॥ ४७ ॥

( इति सस्पृहमालोकयति ।)

**राधा**—एहि ललिदे, लवङ्गकुसुमं अवचिणुम्ह । (क) (इति परिक्रामति ।)

**जरती**—एसा लवङ्गवाडिआ वि कण्हस्स अदिपेअसी । इमाए णिअडं मा गच्छ । पच्चा तुमं मोआवेदं ण सक्किस्सम्ह । (ख)

**ललिता**—अज्जे, तुमं पडिभूत्तणेण संठाविअ अम्हे अप्पाणअं मोआविस्सम्ह । का चिन्ता । (ग)

( इति सकौतुकं सर्वाः कुसुमावचयनं नाटयन्ति । )

**राधा**—ललिदे, परित्ताहि परित्ताहि । एसो दुट्ठो भमरो बाधेइ । (घ)

**सख्यः**—

मुक्किअ लवङ्गलदिअं चवलो महुसूअणो एसो ।
पिअसहि अणिअदपेम्मो तुह मुहगन्धेण अन्धिओ भमई ॥ ४८ ॥ (ङ)

---

(क) एहि ललिते, लवङ्गकुसुममवचयाम ।

(ख) एषा लवङ्गवाटिकापि कृष्णस्यातिप्रेयसी । अस्या निकटं मा गच्छ । पश्चात्त्वां मोचयितुं न शक्ष्यामः ।

(ग) आर्ये, त्वां परिभूत्वेन संस्थाप्य वयमात्मानं मोचयिष्यामः । का चिन्ता ।

(घ) ललिते, परित्राहि परित्राहि । एष दुष्टो भ्रमरो बाधते ।

(ङ) मुक्त्वा लवङ्गलतिकां चपलो मधुसूदन एषः ।
प्रियसखि अनियतप्रेमा तव मुखगन्धेनान्धो भ्रमति ॥

**श्रीकृष्णः**—(अवलोक्य सस्पृहम्।) सखे, पश्य पश्य।

मुखमनुनिपतन्तं वारयन्ती द्विरेफं
भयचकितचलाक्षी न्यञ्चुखीयं करेण।
तमपि तदभिभूतं घूर्णितभ्रूर्धुनीते
स च रुजमभिनिन्ये झङ्कृतैः कङ्कणानाम्॥ ४९॥

**कुसुमासवः**—वअस्स, अअं ओसरो अम्हाणम्। अम्हलवङ्गकुसुमं एसा आहरेदि। इमाए आहरणं बलं कदुअ तुमं आहर। (क)

**श्रीकृष्णः**—एवंविधमालोकनमेवातिसुरसम्। तथापि प्रियबटोर्वचोनुरोधेन तथा कुर्मः। (इति समुपसृत्य सदर्पम्।) अयि ललिते, दुर्ललितेऽद्य के तव साहसिक्यशिक्षामेताम्। कस्ते मदो मदोकसि वृन्दावने कथं स्वातन्त्र्यमारभ्यते। वारंवारमेव मे वनमागत्य गत्यनवस्थया तत इत इतरजनीवद्गात्रगर्वेण फलकुसुमसुमञ्जुललताविटपभङ्गमाचरन्त्यश्चरन्त्यः परितोऽपरितोषं मम जनयन्ति। नयं तिरस्कृत्य मामवजानन्ति च भवत्यः। भद्रमद्य विलोकिताः स्थः। अतः परमस्य फलं भुज्यताम्।

**जरती**—अरे कन्हड, कुसुमेहिं ज्जेव एदाणं पओजणम्। ण क्खु फलभोअत्थं एदाहिं वणमज्झे आअदम्। (ख)

**कुसुमासवः**—अज्जिए, वअसेण समं तुज्झ बुद्धी च गदा। जदो फलं अवराहे दण्डोत्ति ण आणासि। (ग)

**जरती**—बम्हणडिम्ह, छीरकण्ठो सि। तुमं किं ण जाणेसि। विचारेहि को अवराहो। अवराहे ज्जेव दण्डो ण क्खु सराहासु अम्हेसु। (घ)

---

(क) वयस्य, अयमवसरोऽस्माकम्। अस्मल्लवङ्गकुसुममेषाहरति। अनयाहृतं बलं कृत्वा त्वमाहर।

(ख) अरे कृष्ण, कुसुमैरेवैतासां प्रयोजनम्। न खलु फलभोगार्थमेताभिर्वनमध्य आगतम्।

(ग) आर्ये, वयसा समं तव बुद्धिश्च गता। यतः फलमपराधे दण्ड इति न जानासि।

(घ) ब्राह्मणडिम्भ, क्षीरकण्ठोऽसि। त्वं किं न जानासि। विचारय कोऽपराधः। अपराध एव दण्डो न खलु सराधास्वस्मासु।

ललिता—अये बडुअ, तुम्ह वअस्सो अस्स वणस्स को। (क)

कुसुमासवः—ललिदे, अहिआरी अअम्। (ख)

ललिता—होइ, एवं णेदम्। अहिओ अरी जइ ण होइ तदो कधं अम्ह पिअसहीए एदस्स वणस्स एदारिसी अवत्था। (ग)

कुसुमासवः—ललिदे, पण्डिदत्तणं पआसेसि। होदु होदु। अम्ह वअस्सो एदस्स वणस्स अहिओ अरी ज्जेव। एदं वणं तुम्ह पिअसहीए कधं जादम्। (घ)

ललिता—उवभोओ ज्जेव पमाणम्। अण्णधा कधं णीसङ्कं कुसुमाइं आहरेम्ह। (ङ)

जरती—सच्चं ज्जेव भणिदं ललिदाए। मह णत्तिणीए ज्जेव एदं वणम्। जाए एत्थ देअदारूएण णिओइदा अप्पाणो परिअणरूआ वुन्दा। (च)

श्रीकृष्णः—(विहस्य।) आर्ये, वृन्दा खलु तव नप्त्र्याः परिजनरूपा।

जरती—अरे कन्हड, एत्थ को संदेहो। सा ज्जेव पुच्छीअदु। (छ)

कुसुमासवः—(कर्णे लगित्वा।) भो वअस्स, सा क्खु एदानं ज्जेव पच्छवादिणी। सा पमाणत्तणेण ण पुच्छिदव्वा। (ज)

---

(क) अये बटुक, तव वयस्योऽस्य वनस्य कः।

(ख) ललिते, अधिकार्ययम्।

(ग) भवति, एवं न्वेतत्। अधिकोऽरिर्यदि न भवेत्तदा कथमस्मात्प्रियसख्या एतस्य वनस्यैतादृश्यवस्था।

(घ) ललिते, पाण्डित्यं प्रकाशयसि। भवतु भवतु। अस्मद्वयस्य एतस्य वनस्याधिकोऽरिरेव। एतद्वनं तव प्रियसख्याः कथं जातम्।

(ङ) उपभोग एव प्रमाणम्। अन्यथा कथं निःशङ्कं कुसुमान्याहरामः।

(च) सत्यमेव भणितं ललितया। मम नप्त्र्या एवैतद्वनम्। ययात्र देवतारूपेण नियोजितात्मनः परिजनरूपा वृन्दा।

(छ) अरे कृष्ण, अत्र कः संदेहः। सैव पृच्छयताम्।

(ज) भो वयस्य, सा खल्वेतासामेव पक्षपातिनी। सा प्रामाण्यत्वेन न प्रष्टव्या।

सुबलः—कुसुमासव, मा भेतव्यम् । ललिते, मद्वयस्यनाममुद्रैवात्र प्रमाणम् । या खलु प्रतिद्रुममेव विराजते ।

ललिता—जइ एवं तहवि अम्हे ण अपरज्झह्म । सअलाओ ज्जेव लदाओ मह पिअसहीणामक्खरङ्किदा । तेण क्खु लदासु को अहिआरो तुह वअस्सस्स । अम्हेहिं लवङ्गलदिआणं ज्जेव कुसुमाइं आहरीअन्ति । (क)

जरती—ललिदे, णिम्मुञ्छणं दे जामि । भद्दं ज्जेव भणिदम् । कन्हड, कीस कलहाएसि आत्तणो अहिआरे चिट्ठन्तीहिं एदाहिं सद्धम् । मग्गसि जइ तदो मग्ग । मए ज्जेव दादव्वाणि लवङ्गकुसुमाइं । तुमं कस्स ण पिओ होइ । (ख)

राधा—(सस्पृहमात्मगतम् । कृष्णमुद्दिश्य संस्कृतेन ।)

श्यामीकरोति भुवनं वपुषा दिगन्ता-
न्पूर्णेन्दुमण्डलमयी कुरुते मुखेन ।
वाचा सुधारसभृतो विदधाति कर्णा-
न्दृष्ट्या नभोऽम्बुजमयी कुरुते किमेतत् ॥ ५० ॥

जरती—कन्हड, लेहि कुसुमाइं । (ग) (इति तासामञ्चलतः कुसुमान्यादाय कृष्णोपकण्ठं विकिरति ।)

राधा—(अञ्चलेन मुखमावृत्य किंचित्स्मित्वा ।) अज्जिए, किं किदम् । देअपूअणकिदे अवचिदस्स कुसुमस्स ईरिसी अवत्था किदा । (घ)

---

(क) यद्येवं तथापि वयं नापराध्याम । सकला एव लता मम प्रियसखीनामाक्षराङ्किताः । तेन खलु लतासु कोऽधिकारस्तव वयस्यस्य । अस्माभिर्लवङ्गलतिकानामेव कुसुमान्याह्रियन्ते ।

(ख) ललिते, निर्मुञ्छनं ते यामि । भद्रमेव भणितम् । कृष्ण, किमर्थं कलहायस आत्मनोऽधिकारे तिष्ठन्तीभिरेताभिः सार्धम् । याचसे यदि तदा याचस्व । मयैव दातव्यानि लवङ्गकुसुमानि । त्वं कस्य न प्रियो भवसि ।

(ग) कृष्ण, लभस्व कुसुमानि ।

(घ) आर्ये, किं कृतम् । देवपूजनकृतेऽवचितस्य कुसुमस्येदृश्यवस्था कृता ।

श्रीकृष्णः—(राधां निर्वर्ण्य स्वगतम् ।) अहो, अतिरम्यत्वं वर्तते वसनावृतमुखायाः । यतः ।

अञ्चली मृगदृशो दृगञ्चलः पञ्जरस्थ इव भाति खञ्जनः ।
लेश एष हसितस्य दृश्यते वस्त्रपूत इव चन्द्रमोद्भवः ॥ ५१ ॥

ललिता—अज्जिए, अदिभआउलासि तुमम् । किंत्ति चिरपरिस्समेण अवचिदं कुसुमं णट्ठीकिदम् । को एसो इमस्स वुन्दावणस्स । (क)

जरती—ललिदे, समत्थासि तुमं कलहं कादुम् । अलीअगव्वभरकण्डूलं दे हिअअम् । ता कुणह एतेहिं धिट्ठेहिं सह कलहम् । एहि णत्तिणि, एहि । (ख) (इति राधामादाय गन्तुं प्रवृत्ता ।)

राधा—अज्जे, कहिं गन्तव्वम् । गोवीसरो ण अच्चिदव्वो । (ग)

कुसुमासवः—अज्जिए, एत्थ वअस्सस्स दाणं वट्टदि । कुसुमचोरिअं तुह मुहं दट्ठूण समत्थिदं दाणं दाउण सव्वाओ गच्छन्तु । (घ)

जरती—अरे बम्हणबडुअ, किं रे दाणम् । (ङ)

कुसुमासवः—वअस्स सुअल, भणीअदु । (च)

सुबलः—आर्ये, श्रूयताम् ।

योग्यं मत्वा स्मरनरपतिः पश्य दत्त्वा प्रसूनं
वृन्दारण्ये नवकुलवधूवृन्दघट्टाधिपत्ये ।

---

(क) आर्ये, अतिभयाकुलासि त्वम् । किमिति चिरपरिश्रमेणावचितं कुसुमं नष्टीकृतम् । क एषोऽस्य वृन्दावनस्य ।

(ख) ललिते, समर्थासि त्वं कलहं कर्तुम् । अलीकगर्वभरकण्डूलं ते हृदयम् । तस्मात्कुर्वेतैर्धृष्टैः सह कलहम् । एहि नप्त्रि, एहि ।

(ग) आर्ये, कुत्र गन्तव्यम् । गोपीश्वरो नार्चितव्यः ।

(घ) आर्ये, अत्र वयस्यस्य दानं वर्तते । कुसुमचौर्यं तव मुखं दृष्ट्वा समर्थितं दानं दत्त्वा सर्वा गच्छन्तु ।

(ङ) अरे ब्राह्मणबटुक, किं रे दानम् ।

(च) वयस्य सुबल, भण्यताम् ।

यत्नादस्थापयदयमिमं मद्वयस्यं यशस्यं
दत्त्वा शुल्कं व्रजत सुदृशो मास्तु शुष्को विवादः ॥ ५२॥

जरती—होदु दे वअस्सो दानी। अम्हाणं किं तेण। सुमरणरवइणो वसाओ ण अम्हे। (क)

कुसुमासवः—होइ, बुड्ढिआए तुह कहिं तस्स अहीणदा। (ख)

जरती—(सक्रोधम्।) अरे, दाणयोग्गपअत्थो जइ होइ तदो सङ्का करीअदि। (ग)

सुबलः—प्रियवयस्य, स्वयमस्योत्तरं दीयताम्।

श्रीकृष्णः—(सगाम्भीर्यम्।) हन्त भोः, श्रूयताम्।

रत्नाद्यं वः कुवलयदृशामस्तु वा मास्तु वस्तु
प्रेङ्खालेऽस्मिन्भुजलतिकयोर्भागधेयो विधेयः।
मर्यादेयं मम निगदिता किंतु रत्नान्यपीमा-
न्यानीयन्ते पुरटपुटिकामन्तरा दर्शयध्वम् ॥ ५३ ॥

सख्यः—पूओवकरणपुडिआ इअं गोवीसरस्स। (घ)

कुसुमासवः—अरे मुक्खा, अअं ज्जेव गोवीसरो। इमं ज्जेव पूएध। (ङ)

सख्यः—महाआलो गोवीसरो। (च)

कुसुमासवः—अअं महाआलो किं ण होदि। जस्स रुइपडलेहिं सव्वं ज्जेव वणं तमालवण्णं किदम्। (छ)

सख्यः—चन्दअसेहरो ज्जेव अच्चिदव्वो। (ज)

---

(क) भवतु ते वयस्यो दानी। अस्माकं किं तेन। स्मरनरपतेर्वश्या न वयम्।

(ख) भवति, वृद्धायास्तव कथं तस्याधीनता।

(ग) अरे, दानयोग्यपदार्थो यदि भवति तदा शङ्का क्रियते।

(घ) पूजोपकरणपुटिकेयं गोपीश्वरस्य।

(ङ) अरे मूर्खाः, अयमेव गोपीश्वरः। इममेव पूजयत।

(च) महाकालो गोपीश्वरः।

(छ) अयं महाकालः किं न भवति। यस्य रुचिपटलैः सर्वमेव वनं तमालवर्णं कृतम्।

(ज) चन्द्रकशेखर एवार्चितव्यः।

कुसुमासवः—पेक्ख पेक्ख । एसो चन्दअसेहरो ण होइ । (क) (इति बर्हावतंसं दर्शयति ।)

सख्यः—वाआल, गोरीपर्तिं पूअइस्सम्ह । (ख)

कुसुमासवः—तुम्हे गोरीओ ण भवेध । (ग)

जरती—अरे बडुआ, एदाणं पई तुह वअस्सो त्ति तुमं जाणेसि । चिट्ठ चिट्ठ । गाममज्झे तुह दंसणं ण लम्भिस्सम् । (घ)

सख्यः—अरे वाआल, पसुवई पूइदव्वो । (ङ)

कुसुमासवः—हन्त भो, एत्तिआओ धेणुओ जो पालेदि सो किं पसुवई ण होइ । (च)

सख्यः—एव्वं भणध । जस्स एदे अम्हे पसुओ सो किं पसुवई ण होइ । (छ)

सुबलः—भवतु । वयं सर्वे एव पशवः । तेन भवन्मतेऽयमेव पशुपतिः । तदयमर्च्यताम् । किंच पुटिकाभिः कृत्वा किं नीयते तद्दर्शयित्वा सुखं गम्यताम् । किमनेन शुष्ककलहेन ।

राधिका—भो सहीओ, दंसेध । (ज)

(सख्यस्तथा कुर्वन्ति ।)

कुसुमासवः—(विलोक्य ।) अअं मिअमओ, एदं कुङ्कुमम्, एदं

---

(क) पश्य पश्य । एष चन्द्रकशेखरो न भवति ।

(ख) वाचाल, गौरीपर्तिं पूजयिष्यामः ।

(ग) यूयं गौर्यो न भवथ ।

(घ) अरे बटुक, एतासां पतिस्तव वयस्य इति त्वं जानासि । तिष्ठ तिष्ठ । ग्राममध्ये तव दर्शनं न लप्स्ये ।

(ङ) अरे वाचाल, पशुपतिः पूजितव्यः ।

(च) हन्त भोः, एतावतीर्धेनूर्यः पालयति स किं पशुपतिर्न भवति ।

(छ) एवं भणत । यस्यैता वयं पशवः स किं पशुपतिर्न भवति ।

(ज) भोः सख्यः, दर्शयत ।

कालगुरुअम्, एदं चन्दनम्, अअं कप्पूरो, अअं मोत्ताहारो सिप्पकोसलेण फणिहारो व्व किदो। (क)

**जरती**—अरे, फणिहारो इमं वडुअं दंसेध। (ख)

**कुसुमासवः**—अज्जिए, कालिअमद्दणसहअरस्स मे कुदो फणिहारदो भअम्। ता एदाणं करं दाउण गच्छध। (ग)

**सख्यः**—होदु। अम्हे देअपूअं कदुअ घरं गच्छम्ह। तदो तुह वअस्सो तत्थ जइ गच्छदि तदा जं सक्कीअदि तं ज्जेव दादव्वम्। (घ)

**कुसुमासवः**—अरे दासीए धीदाओ, अप्पणो अहिआरपदेसं मुञ्चिअ तुम्ह घरं गदुअ मग्गिस्सदि मे वअस्सो। ता चिट्ठध चिट्ठध। (ङ) (इति पूजोपकरणान्यादातुमिच्छति।)

**ललिता**—अत्र गोवराअणन्दणेण देवद्दव्वाणि एदाणि एव्वं अपवित्ताणि कादुं ण जुज्जीअन्ति। (च)

**राधा**—ललिदे, इमिणा प्फंसिदाणि एदाणि कधं देवस्स दादव्वाणि। ता मुञ्च मुञ्च। घरं गदुअ अण्णोवअरणं आणिअ देओ अच्चिदव्वो। ता अज्जिए, एहि। घरं गच्छम्ह। (छ) (इति गन्तुमिच्छति।)

**श्रीकृष्णः**—(पन्थानमाक्रम्य।) अयि चतुरंमन्ये, क्व यासि।

---

(क) अयं मृगमदः एतत्कुङ्कुमम्, एतत्कालागुरुकम्, एतच्चन्दनम्, अयं कर्पूरः, अयं मुक्ताहारः शिल्पकौशलेन फणिहार इव कृतः।

(ख) अरे, फणिहार इमं बटुकं दंशेत।

(ग) आर्ये, कालियमर्दनसहचरस्य मे कुतः फणिहारतो भयम्। तस्मादेतेषां करं दत्त्वा गच्छत।

(घ) भवतु। वयं देवपूजां कृत्वा गृहं यामः। ततस्तव वयस्यस्तत्र यदि गच्छति तदा यच्छक्यते तदेव दातव्यम्।

(ङ) अरे दास्या दुहितरः, आत्मनोऽधिकारप्रदेशं त्यक्त्वा तव गृहं गत्वा याचिष्यति मे वयस्यः। तस्मात्तिष्ठत तिष्ठत।

(च) अत्र गोपराजनन्दनेन देवद्रव्याण्येतान्येवमपवित्राणि कर्तुं न युज्यन्ते।

(छ) ललिते, अनेन स्पृष्टान्येतानि कथं देवस्य दातव्यानि। तस्मान्मुञ्च मुञ्च। गृहं गत्वान्योपकरणमानीय देवोऽर्चितव्यः। तस्मादार्ये, एहि। गृहं गच्छाम।

राधा—(सावहित्थामर्षम् ।) मूलं ज्जेव दिण्णम् । किं तस्स दाणं मग्गासि । (क)

श्रीकृष्णः—(सहासामर्षम् ।) किं मूलं दत्तमस्ति । मूलं त्वेतदेव श्रूयताम् ।

एतत्स्वर्णसरोरुहं तदुपरि श्रीनीलरत्नोत्पले
तत्पश्चात्कुरुविन्दकन्दलपुटे तत्रापि मुक्तावली ।
सर्वं दृश्यत एव किंतु निभृता या हेमकुम्भद्वयी
किं वान्यन्नयसेऽनयेति तदिदं बाले विचार्यं मर्म ॥ ५४ ॥

राधा—को तुमं विचारस्स । ण हि अविचारेण विचारो कादुं सक्कीअदि । (ख)

जरती—(द्वयोर्मध्यमध्यास्य । संस्कृतेन ।) अरे यशोदामातर, मा तरलो भव । लोभवता हृदयेन कथमाचरसि दुर्विनीतत्वम् । तत्त्वं ते कथयामि । यदि निराकुलकुलवधूपद्रवद्रवकथा क्रियते, तदा न तेन ते भद्रं भविप्यति ।

ललिता—(सक्रोधमुपसृत्य । संस्कृतेन ।) ।

कस्त्वं भो ननु माधवः कथमहो वैशाख आकारवा-
न्मुग्धे विद्धि जनार्दनोऽस्मि तदिदं ब्रूते वनावस्थितिः ।
मां गोवर्धनधारिणं न धरणौ को वेत्ति हुं वर्धनं
हिंसां हे वृषहन्बिभर्षि तदघद्वारैव गोवर्धनम् ॥ ५५ ॥

प्रेमभक्तिः—अहो कौतूहलम् ।

---

(क) मूलमेव दत्तम् । किं तस्य दानं याचसे ।
(ख) कस्त्वं विचारस्य । नह्यविचारेण विचारः कर्तुं शक्यते ।

---

१. अत्र भेदेऽप्यभेदरूपातिशयोक्तिरलंकारः. तदुक्तं साहित्यदर्पणे यथा–'सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते । भेदेऽप्यभेदः संबन्धेऽसंबन्धस्तद्विपर्ययौ । पौर्वापर्यात्ययः कार्यहेत्वोः सा पञ्चधा ततः ॥' इति.

२. अत्र श्लेषावक्रोक्तिरलंकारः. तदुक्तं साहित्यदर्पणे यथा–'अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि । अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥' इति.

येयं नटैरप्यभिनीयमाना लीला हरेरेति रसायनत्वम् ।
सा यत्स्वकीयैः स्वयमीश्वरेणाभिनीयते तत्किमुदाहरामः[1] ॥ ५६ ॥

अपि च ।

सामाजिकानां हि रसो नटानां नैवेति पन्थाः कृतिषु प्रसिद्धः ।
हन्तोभयत्वे रसवित्त्वमेषामलौकिके वस्तुनि को विरोधः ॥ ५७ ॥

अपि च ।

अलौकिकाल्लौकिकमेव शौरेर्वृत्तं चमत्कारि तदेव लीला ।
आकर्षकत्वं हि जगज्जनानामलौकिकत्वस्य स कोऽपि हेतुः ॥ ५८ ॥

(इति सविस्मयमालोकयति ।)

**कुसुमासवः**—अइ कुडिले दुव्विणीदे ललिदे, मह वअस्सो दुट्ठाआरो किदो । ता चिट्ठ चिट्ठ । (क)

**सुबलः**—(सपरिहासामर्षम् ।) हन्त भोः, सत्यमेतत् ।

वक्रं वो द्विजराजहिंसि मदिरालोले दृशौ रोचिषा
मूर्तिः काञ्चनहारिणी न विरमो गुर्वङ्गनासङ्गतः ।
सङ्गी पञ्चम एष पञ्चविशिखः शुद्धिस्तथापीह वो
यन्नामाप्यखिलाघनाशि स परं दुष्टोऽस्मदीयः सखा ॥ ५९ ॥

तद्वयस्य घट्टपाला हि विना धृष्टताप्रकटनेन स्वार्थकुशला न भवन्ति । तदात्मनः प्रकटय शौटीर्यम् ।

(श्रीकृष्णोऽन्तर्वर्तिनी भूत्वा राधां पृष्ठतः कृत्वा स्थितवतीं जरतीं करेण निक्षिप्य बलाद्राधापटान्तग्रहणमभिनयति । जरती बलान्मोचयित्वा राधामन्तर्धापयन्ती स्वयमप्यन्तर्दधाति । नित्यानन्दः स्वरूपेण स्थितो नृत्यति ।)

**मैत्री**—देवि, किं न्विदम् । कुदो अअं अअम्हादो णिच्चाणन्दो । कहिं गदा सा जरदी । (ख)

---

(क) अयि कुटिले दुर्विनीते ललिते, मम वयस्यो दुष्टाचारः कृतः । तस्मात्तिष्ठ तिष्ठ ।

(ख) देवि, किं न्विदम् । कुतोऽयमकस्मान्नित्यानन्दः । कुत्र गता सा जरती ।

---

१. अत्रार्थापत्तिरलंकारः. तदुक्तं साहित्यदर्पणे यथा–'दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते' इति.

**प्रेमभक्तिः**—अयं खलु योगमायाप्रभावः । स्वयमस्मिन्नाविश्य जरती भूत्वा संप्रति रसः सावशेष एव सुरसो भवतीति यथासमयमन्तर्हितासौ । ततः स्वरूपेणावतिष्ठतेऽयं नित्यानन्दः । यतः ।

स्वतो बलीयः सहजो हि भावः स कृत्रिमं भावमधः करोति ।
अग्न्यातपाभ्यां जनितो जलानां नैवोष्णभावश्चिरकालवर्ती ॥ ६० ॥

तदिदानीमेतावतैव स्थितं नाट्यम् । भवति हि ईश्वरलीलैवेयम्, न खलु नटरीतिः । पश्याद्वैतो द्वैत एव ।

**मैत्री**—ण आणे दाणिं भअवं कीदिसो होइ । (क)

(नेपथ्ये ।)

भो भोः, संन्यासी संन्यासी ।

**प्रेमभक्तिः**—अहो, किमियमाकस्मिकी प्रतिकूलवाङ् । निरूपयामि । (इति निरूप्य ।) अये भगवद्वाटीं कश्चित्संन्यासी प्रविशति । तमालोक्य कश्चिदाक्रोशति । तदेहि । सहैव निष्क्रमाव ।

(इति निष्क्रान्तौ ।)

(इति निष्क्रान्ताः सर्वे ।)

इति दानविनोदो नाम तृतीयोऽङ्कः ।

---

चतुर्थोऽङ्कः ।

(ततः प्रविशत्याचार्यरत्नपत्न्यानुगम्यमाना भगवती शची ।)

**शची**—बहिणीए, सण्णासिणं पदि कधं सिरिविस्संभरस्स एदारिसो आअरो । विजादीअवासणो क्खु सण्णासी । (ख)

**भगिनी**—आअरो कधं जाणिदो । (ग)

**शची**—जदो तत्थ दिअहे केसवभारदीणामस्स कस्सवि सण्णासिणो

---

(क) न जाने इदानीं भगवान्कीदृशो भवति ।

(ख) भगिनि, संन्यासिनं प्रति कथं श्रीविश्वंभरस्यैतादृश आदरः । विजातीयवासनः खलु संन्यासी ।

(ग) आदरः कथं ज्ञातः ।

भिच्छत्थं सद्धालुओ हुविअ मं उत्तवम् । सअं च तस्सिं गुरुई भत्ती अणुराओ वि पअडिदो । (क)

**भगिनी**—सो वि भत्तो हुविस्सदि व्व । (ख)

**शची**—कम्पेदि मे हिअअं सण्णासीणाममेत्तेण । अस्स अग्गएणाहं पढाइदा । इमं संदब्भं तस्स ठाणे पुच्छिस्सम् । (ग)

**भगिनी**—जुत्तं णेदम् । (घ)

**शची**—ता जाणेहि । कुदो सो मह हिअआणन्दणो चन्दणद्दुमो । (ङ)

**भगिनी**—(पुरोऽवलोक्य ।) देवि, पेक्ख पेक्ख । अअं दे पुण्णिमाचन्दो व्विअ पुव्वदिसाए उग्गच्छदि णन्दणो । (च)

(शची सस्पृहमालोकयति ।)

(ततः प्रविशति भगवान्विश्वंभरः ।)

**विश्वंभरः**—(अञ्जलिं बद्ध्वा ।) अम्ब, प्रणमामि ।

**शची**—चिरं जीअ । (इति मूर्द्धानमाघ्राय ।) ताद, इअं आचारिअरअणकलत्तम् । इमं पणम । (छ)

(देवस्तथा करोति । सा ससाध्वसं संकुचति ।)

**शची**—ताद, एक्कं पुच्छिस्सम् । (ज)

**देवः**—आज्ञापय ।

---

(क) यदा तत्र दिवसे केशवभारतीनाम्नः कस्यापि संन्यासिनो भिक्षार्थं श्रद्धालुर्भूत्वा मामुक्तवान् । स्वयं च तस्मिन्गुर्वी भक्तिरनुरागोऽपि प्रकटितः ।

(ख) सोऽपि भक्तो भविष्यत्येव ।

(ग) कम्पते मे हृदयं संन्यासिनाममात्रेण । अस्याग्रजेनाहं पाठिता । इमं संदर्भं तस्य स्थाने प्रक्ष्ये ।

(घ) युक्तमिदम् ।

(ङ) तज्जानीहि । कुतः स मम हृदयानन्दनश्चन्दनद्रुमः ।

(च) देवि, पश्य पश्य । अयं ते पूर्णिमाचन्द्र इव पूर्वदिशाया उद्गच्छति नन्दनः ।

(छ) चिरं जीव । तात, इयमाचार्यरत्नकलत्रम् । एनां प्रणम ।

(ज) तात, एकं प्रक्ष्ये ।

**शची**—पुत्तअ, सण्णासिणं पदि कधं दे एदारिसो आअरो । जं तत्थ दिअहे केसवभारदीं पदि तादिसी भत्ती किदा तुमए । (क)

**देवः**—अम्ब, ते खलु परमभागवता भवन्ति ।

**शची**—तत्तं कधेहि । सण्णासो वा कादब्वो तुमए । (ख)

**देवः**—(विहस्य ।) अम्ब, कुतोऽयं ते भ्रमः । इदमपि भवति किम् ।

**शची**—वच्छ, एदेण ज्जेव दे अग्गएण दिण्णं पुत्थअं मए पाअसमए चूलीमज्झे दाउण जालिदम् । (ग)

**देवः**—किं पुस्तकं कथं वा प्रदीपितम् ।

**शची**—विस्सरूएण मे कधिदम्—'अम्ब, विश्वंभरो यदा विज्ञो भवति तदा तस्मा एतत्पुस्तकं देयम्' इति । मए दाव दाव ज्जेव तं रक्खिदं जाव सो पव्वइदो ण भूदो । पव्वइदे तत्थ अअं पि एदं पुत्थअं लम्भिअ पव्वइदो हुविस्सदित्ति तुह सङ्काए जालिदम् । (घ)

**देवः**—(क्षणमनुतप्य विहस्य च ।) अम्ब, यद्यपि संविद्रूपैव भवती तथापि पुत्रवात्सल्येनेदमज्ञानविलसितमनुशीलितम् ।

**शची**—ताद, एसो अवराहो मम ण गहिदब्वो । (ङ)

**देवः**—कोऽपराधो जनन्याः पुत्रेपु । किंतु ममापराधो यदि भवति तदा क्षन्तव्य एवासौ मातृचरणैरिति प्रसादः क्रियताम् ।

---

(क) पुत्र, संन्यासिनं प्रति कथं त एतादृश आदरः । यत्तस्मिन्दिवसे केशव-भारतीं प्रति तादृशी भक्तिः कृता त्वया ।

(ख) तत्त्वं कथय । संन्यासो वा कर्तव्यस्त्वया ।

(ग) वत्स, एतेनैव तेऽग्रजेन दत्तं पुस्तकं मया पाकसमये चुल्लीमध्ये दत्त्वा ज्वालितम् ।

(घ) विश्वरूपेण मे कथितम् । मया तावत्तावदेव तद्रक्षितं यावत्स प्रव्रजितो न भूतः । प्रव्रजिते तत्रायमप्येतत्पुस्तकं लब्ध्वा प्रव्रजितो भविष्यतीति तव शङ्कया ज्वालितम् ।

(ङ) तात, एषोऽपराधो मम न ग्रहितव्यः ।

शची—वत्स, ण क्कहिंपि दे अवराहो गहिदव्वो । सो तुह णत्थि ज्जेव । (क)

देवः—अम्ब, दिनानि कतिपयानि कुत्रापि मम गन्तव्यमस्ति । त्वया मनसि खेदो न कार्यः ।

शची—कहं गन्तव्वम् । (ख)

देवः—अम्ब, येन भवत्याः सर्वेषां च बन्धूनां सदा सुखायैव भूयते तदनुसंधानं कर्तुम् ।

शची—तं क्खु तुमं ज्जेव । (ग)

देवः—यद्यप्येवमेव तथापि येन ममापि शोभातिशयो भवति तदर्थं यतिष्यते ।

शची—वत्स, जधा मह दुक्खं ण होइ तधा करणिज्जम् । (घ)

देवः—अम्ब,

श्रीकृष्णः परिपालकस्तव पिता माता च पुत्रोऽपि च
ज्ञातिश्च द्रविणं च नित्यसुखदो बन्धुश्च देवोऽपि च ।
सङ्गः शाश्वत एव यस्य तमनुस्मृत्यानिशं चेतसा
संपन्नासि तवाधुना सुखमयं जानीहि दिङ्मण्डलम् ॥ १ ॥

शची—वत्स, तुमं ज्जेव सव्वम् । तुह पसादादो मह दुक्खं णत्थि । किंतु जधा संततं तुमं पेक्खामि तह ज्जेव कादव्वम् । (ङ)

देवः—कृष्ण एव सततं त्वया द्रष्टव्यः । स एव तव सर्वदुःखध्वंसी भविष्यति ।

शची—तहत्थु । ता तुमं ज्जेव मम कन्हो । ता उत्थेहि । मज्झण्हो

---

(क) वत्स, न कुत्रापि तेऽपराधो ग्रहितव्यः । स तव नास्त्येव ।

(ख) कथं गन्तव्यम् ।

(ग) तत्खलु त्वमेव ।

(घ) वत्स, यथा मम दुःखं न भवति तथा कर्तव्यम् ।

(ङ) वत्स, त्वमेव सर्वम् । तव प्रसादतो मम दुःखं नास्ति । किंतु यथा संततं त्वां प्रेक्ष्यामि तथैव कर्तव्यम् ।

जादो । तुमंपि सिणाणपूअणादिकं कुणह । अहंपि पाअत्थं जामि । बहिणिए, तुमंपि घरं गच्छ । तवावि भअवदो पाअसेआसमओ जादो । (क)

(इति सर्वे निष्क्रामन्ति ।)

(ततः प्रविशत्यद्वैतः ।)

अद्वैतः—भूतावेशविवशनिखिलेन्द्रियवृत्तिर्भगवदावेशविसंष्ठुलश्च समानमेव भावमादधाति । यतः खलु यावत्तस्मिन्दिवसे भगवदावेशेन यन्मया नर्तितं तज्जनमुखादेव सांप्रतं श्रुत्वा प्रतीयते संदिह्यते च । तेनाव्याहतप्रभावोऽयं भगवान्विश्वंभरः । वस्तुतस्तु कोटिकोटिजगदण्डघटघटनविघटननाटकपरिपाटीपाटवस्य निजचरितललितकीर्तिसुधाधावितजगज्जनहृदयावटघटमानतमःकाटवस्य भगवतस्तथैव लीलायितं खलु प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यैतिह्यादिप्रमाणनिवहैरपि न प्रमातुं शक्यते विना तस्यैवानुग्रहजन्यज्ञानविशेषम् । तेन तदानींतनमलौकिकचमत्कारकारणमसन्निष्ठमपि नटनलीलायितं नास्माकमनुभवगोचरस्तद्व्यवसितम् । तेन

यास्यन्ति केऽपि मोहं विवदिष्यन्ते च तैः समं केचित् ।
केचन संदर्भविदो रहस्यमिदमित्यवैष्यन्ति ॥ २ ॥

(इत्यूर्ध्वमवलोक्य ।) अहो, चरमाचलशिखरचुम्बी लम्बमानोऽयं भगवान्मरीचिमाली । तथा हि ।

नाम्नैव मे त्वमसि किंत्वखिलग्रहाणां
विश्रामपात्रमिति तत्पतिनाभिशस्ता ।
तत्प्रत्ययाय परितप्तमयो दधाति
संध्यार्कबिम्बकपटादिव वारुणी दिक् ॥ ३ ॥

---

(क) तथास्तु । तत्त्वमेव मम कृष्णः । तस्मादुत्तिष्ठ । मध्याह्नो जातः । त्वमपि स्नानपूजनादिकं कुरु । अहमपि पाकार्थं यामि । भगिनि, त्वमपि गृहं गच्छ । तवापि भगवतः पाकसेवासमयो जातः ।

---

१. अत्र चोत्प्रेक्षाप्राणितापह्नुतिरलंकारः समासोक्तिश्चेत्यनयोरेकाश्रयानुप्रवेशः. तदुक्तं साहित्यदर्पणे यथा—'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः । समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः ॥' इति.

अथवा ।

> सायाह्नसङ्गसुखलुप्तधियः प्रतीच्याः
> शोणाभ्रवाससि समुच्छ्वसिते नितम्बात् ।
> काञ्चीकलापकुरुविन्दमणीन्द्ररूपी
> कालक्रमाद्दिनपतिः पतयालुरासीत् [1] ॥ ४ ॥

तदिदानीं विगतवर्त्मपरिश्रमः संध्यामुपास्य दर्शनीयतमो द्रष्टव्यः स खलु भगवान्विश्वंभरः । (इति तथा कर्तुमिच्छति ।)

(नेपथ्ये ।)

हन्त भोः, निजपुरं गत्वा समागतप्रायोऽहमिति कृत्वा गतोऽद्वैतः कथमद्यापि नायातः ।

अद्वैतः—(श्रुतिमभिनीय ।) अहो, मद्विलम्बमालोक्य स्वयमेव देवो मामाक्षिपति । तदहं सत्वरमेव गच्छामि । (इति परिक्रामति ।)

(प्रविश्यापटीक्षेपेण ।)

श्रीवासः—भो अद्वैत, देव आज्ञापयति भगवान्—'अहमितः श्रीवासगृहं गच्छन्नस्मि । भवतापि तत्रैव गन्तव्यम्' इति ।

अद्वैतः—यथाज्ञापयति देवः । (इति तेन सह परिक्रामन्पुरोऽवलोक्य ।) इदमिदं श्रीवासपुरम् । यावत्प्रविशामि । (इति प्रवेशं नाटयित्वा प्राचीं दिशमवलोक्य।) अहो, रम्यम् ।

> आह्लादयन्नक्षि जगज्जनानां प्रेमामृतस्यन्दसुषीमपादः ।
> उल्लासयन्कौमुदमुज्जिहीते चन्द्रश्च विश्वंभरचन्द्रमाश्च [2] ॥ ५ ॥

(ततः प्रविशति श्रीवासादिभिः समुपगम्यमानो भगवान्विश्वंभरः ।)

विश्वंभरः—(प्रत्युत्थाय ।) स्वागतं भोः, स्वागतम् ।

अद्वैतः—श्रीमुखचन्द्रदर्शनेन ।

देवः—(सादरमभिवन्द्यालिङ्ग्य च ।) भगवन्, अत्रोपविश्यताम् ।

---

१. अत्र रूपकसमासोक्त्यपह्नुतीनां संकरः २. अत्रार्थश्लेषशब्दश्लेषयोः संसृष्टिः. तयोर्लक्षणं साहित्यदर्पणे यथा—'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् । श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ॥' इति.

अद्वैतः—यथाज्ञापयसि।

(इति सर्वे सुखोपवेशं नाटयन्ति।)

भगवान्—(अद्वैतं प्रति।) सर्वे वयं भुक्तवन्तः पीतवन्तश्च। केवलमध्वपरिश्रान्ताः क्षुत्परिश्रान्ताश्च भवन्तः। तदलं विलम्बेन।

श्रीवासः—आतिथेयोऽसि। आतिथ्येन समुपचर्यन्तामेते भवता।

अद्वैतः—अलमनया चिन्तया। वयमपि भवन्त इव समाप्तसर्वाह्निका एव।

भगवान्—(सप्रमोदम्।) तदिदानीं हिमकरकरकलधौतजलधौते श्रीवासवासाङ्गणपरिसरे भगवत्संकीर्तनमङ्गलमङ्गीकुर्वन्तु भवन्तः।

सर्वे—(सप्रमोदम्।) भगवन्, उत्थीयतां स्वयमपि।

भगवान्—एषोऽहं गच्छामि।

(इति संकीर्तनस्थलीं प्रति सर्वे निष्क्रान्ताः।)

(ततः प्रविशति गङ्गादासः।)

गङ्गादासः—अहो अद्वैतदेव, शान्तिपुरतः समागतोऽस्तीति श्रुतमस्ति। न जाने किं भगवद्विश्वंभरालये समुत्तीर्णः श्रीवासालये वा। तदस्य तत्त्वमवधारयामि। (इति कतिचित्पदान्यादधाति।)

(नेपथ्ये संकीर्तनकोलाहलः।)

गङ्गादासः—(आकर्ण्य।) अहो, श्रीवासालयं समया समयासादितसकलभक्तजनप्रमोदी प्रेमोदीर्णसंकीर्तनकोलाहलोऽयं मया श्रूयते। तदित एवाद्वैतेनापि भवितव्यम्। तदिह स्थित्वैव निभालयामि। (इति निभाल्य।) अहो, सर्व एव कीर्तयन्तो भगवन्तं विश्वंभरं नर्तयन्ति नृत्यन्ति च। तदेवं मन्ये।

दुर्वारदैत्यघटया घटिते पटीयो-
　भारे स्वयं भगवतापहृतेऽपि भूमेः।
तस्यावसादमधुना विधुनोति देवो
　भक्तैर्नटन्नटननिष्ठुरपादघातैः॥ ६॥

(पुनर्निभाल्य ।) अहो,

आनन्दः किमु मूर्त एष परमः प्रेमैव किं देहव-
न्श्रद्धा मूर्तिमती दयैव किमु वा भूमौ स्वरूपिण्यसौ ।
माधुर्यं नु शरीरि किं नवविधा भक्तिर्गतैकां तनुं
तुल्यावेशसुखोत्सवो भगवता वक्रेश्वरो नृत्यति[1] ॥ ७ ॥

(पुनर्नेपथ्ये संभूयानन्दतुमुलो जयध्वनिकलकलः ।)

**गङ्गादासः**—(निभाल्य ।) अहो, महत्कौतुकम् ।

वक्रेश्वरे नृत्यति गौरचन्द्रो गायत्यमन्दं करतालिकाभिः ।
वक्रेश्वरो गायति गौरचन्द्रे नृत्यत्यसौ तुल्यसुखानुभूतिः ॥ ८ ॥

(पुनर्नेपथ्ये तथैव जयध्वनिः कोलाहल उलूलुनिनदश्च ।)

**गङ्गादासः**—(चिरं निरूप्य ।) अहो भगवान्विश्वंभर एव नृत्ये प्रवृत्तः । तथाहि ।

गभीरैर्हुंकारैर्निजजनगणान्बर्हिणयति
द्रुतैर्बाष्पाम्भोभिर्भुवनमनिशं दुर्दिनयति ।
महःपूरैर्विद्युद्वलययति दिक्षु प्रमदय-
न्नसौ विश्वं विश्वंभरजलधरो नृत्यति पुरः[2] ॥ ९ ॥

अपि च ।

दिशि विदिशि दृशा सरोजमालां नयनजलेन मधूनि तत्र तन्वन् ।
मधुकरनिकरं भ्रुवा च चक्रभ्रमिनटने जयतीह गौरचन्द्रः[3] ॥ १० ॥

अपि च ।

पादाघातैरुरगनगरानन्दनिस्यन्दहेतो-
र्बाहूत्क्षेपैरिव सुरपुरीताण्डवे पण्डितस्य ।
आशाचक्रं भ्रमयत इव भ्राम्यदुद्योतदण्डै-
र्जीयाच्चक्रभ्रमणनटनं देवविश्वंभरस्य ॥ ११ ॥

(पुनर्निभाल्य ।) अहो, अनन्तरं भगवानद्वैतोऽपि नर्तितुं प्रविष्टः ।

---

१. उत्प्रेक्षालंकारोऽत्र. २. साङ्गरूपकमलंकारोऽत्र. लक्षणं साहित्यदर्पणे यथा—'अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्' इति. ३. व्यधिकरणरूपकालंकारोऽत्र.

श्रीवासस्त्रिभिरेव सुस्वरतमैरामादिभिः सोदरै-
गायत्येष कलं स्वयं च भगवान्वक्रेश्वरश्चोत्सुकः।
मञ्जीराङ्गदहारकङ्कणधरः काञ्चीकलापादिमा-
नद्वैतस्तनुमानिवैष भजनानन्दो नरीनृत्यते॥ १२॥
स्थूलोष्णीषविलाससुन्दरशिराः कर्णद्वये ताण्डवा-
न्दोलन्मौक्तिककुण्डलो हृदि चलच्चामीकरस्रग्वरः।
पादाग्रे चलनूपुरः पुलकितो बाष्पाम्बुधौताननो
नित्यानन्दमहाशयोऽपि महतावेशेन नृत्यत्ययम्॥ १३॥

(अम्बरमवलोक्य।) अहो, याममात्रावशिष्टेयं त्रियामा। उचितमेव घूर्णते नयनयुगलम्। भगवत्या निद्रयाभिभूतोऽस्मि। तदत्रैव क्षणं निद्रामि। (इति निद्रां नाटयन्स्वप्नायते।) भो विश्वंभर देव, कुत्रासि कुत्रासि। (इति स्वप्नायित्वा पुनः प्रबुध्य।) अहो, किमयमालोकितो दुःस्वप्नः। (इति मुहूर्तं हृदि भगवच्चरणौ विचिन्त्य पुनर्नेपथ्याभिमुखमवलोक्य।) अहो, न कोऽपि दृश्यते। सर्व एव भगवत्प्रमुखाः संकीर्तनोपरमे यथायथं शयनाय गतवन्त इव लक्ष्यन्ते। भवतु। तदहमपि स्वनिलयं गच्छामि। (इति कतिचित्पदानि परिक्रम्य।) अहो, विभातैव विभावरी। (इति प्राचीमवलोक्य।)

उल्लङ्घ्य किंचिदुदयाचलवप्रधारां
प्राच्या दिशोऽम्बरतटीमवलम्बमानः।
पादप्रसारणविधावपटुस्तथापि
बालो रविः कलय कालवशादुदेति॥ १४॥

(इति कतिचित्पदानि गत्वा पुरोऽवलोक्य।) अहो, कोऽयं सत्वरः किंचित्पिपृच्छुरिव समुपैति।

(प्रविश्य संभ्रान्तः कश्चित्पुरुषः।)

पुरुषः—अहो गङ्गादास, भवद्वाट्यां देवो विश्वंभरः।

गङ्गादासः—(सोल्लासम्।) अहो मे भागधेयम्। यमवलोकयितुं गच्छन्नस्मि, स एव स्वयमागतोऽस्मद्वाट्याम्।

पुरुषः—अये, एवं पृच्छामि। भवद्वाट्यामागतः किमिति।

**गङ्गादासः**—(सवैमनस्यम् ।) कथमेवं पृच्छसि ।

**पुरुषः**—अन्यस्मिन्नहनि प्रातः स्वनिलये गत्वा कृत्यं करोति । अद्य न गत इति शचीदेव्या प्रेषितोऽस्मि तदन्वेषणाय । (इत्युक्त्वैव पुनरन्यतोऽन्वेष्टुं निष्क्रान्तः । पुनरन्यतः संभ्रान्तः सत्वरं प्रविश्य पुनस्तथैव पृष्ट्वा निष्क्रान्तः । पुनरन्यतः पुनरन्यतः पुनरन्यतश्चेति तथा तथैव पृष्ट्वा पृष्ट्वा निष्क्रामति ।)

**गङ्गादासः**—(सवैमनस्यम् ।) अहो, फलितमिव दुःस्वप्नेन । तत्किं करोमि । अद्वैतादयो यत्र तिष्ठन्ति तत्रैव यामि । (इति कतिचित्पदान्यादधाति ।)

(ततः प्रविशन्ति दौर्मनस्येन वितर्कं नाटयन्तोऽद्वैतादयः ।)

**अद्वैतः**—श्रीवास, किमेतत् ।

मतेऽस्माकं प्रातः स्वभवनमुपेतोऽस्ति भगवा-
न्गृहे श्रीवासादेः स्थित इति जनन्या मतमिदम् ।
इति भ्रान्ताः सर्वेऽप्रकृतमनसः संप्रति वयं
कथं विघ्नोऽकस्मादयमशनिपातोऽद्य भविता ॥ १५ ॥

**श्रीवासः**—ये ये प्रहितास्तदन्वेषणाय तेषां न कोऽपि प्रत्यावर्तते ।

**अद्वैतः**—अन्विष्य यदि पश्यति तदैव प्रत्यावर्तिष्यते । कोऽपि किमप्यनुसंधानं न लब्धवान् । एतत्किं संभाव्यते ।

इह ग्रामे को वा स्थगयतु तमात्मप्रकटनं
स किं वा स्वात्मानं स्थगयितुमपीशः प्रभवतु ।
अपह्नोतुं शक्यो न भवति जनैश्चण्डकिरणः
कथंकारं व्योम्नि स्वमपि स दिने व्यन्तरयतु ॥ १६ ॥

**श्रीवासः**—(पुरोऽवलोक्य ।) अयं गङ्गादासः समायाति । तदयं प्रष्टव्यः ।

**गङ्गादासः**—(उपसृत्य ।) भो भो महाभागाः, कथमाकस्मिकोऽयं विप्लवः ।

---

१. प्रतिवस्तूपमालंकारोऽत्र. तल्लक्षणं साहित्यदर्पणे यथा—'प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥' इति.

**सर्वे**—अहो, अयमपि तदनुसंधानधुरंधरः । यदयमस्मानेव पृच्छति ।

**अद्वैतः**—(साम्रम् ।)

हे विश्वंभरदेव हे गुणनिधे हे प्रेमवारांनिधे
　हे दीनोद्धरणावतार भगवन्हे भक्तचिन्तामणे ।
अन्धीकृत्य दृशो दिशोऽन्धतमसीकृत्याखिलप्राणिनां
　शून्यीकृत्य मनांसि मुञ्चति भवान्केनापराधेन नः ॥ १७ ॥

**मुरारिः**—भो भो देव अद्वैत, त्वमतिदुरवगाहगभीरोऽसि । कथमनिर्णयेनैवं विलपसि । त्वादृशामीदृशानुतापेनैव नितरां प्रतप्ता भविष्यति तपस्विनी शचीदेवी ।

**श्रीवासः**—सत्यमाह मुरारिः । यतः ।

तन्मात्रपुत्रा बत सा तदेकचक्षुस्तदेकस्वसुखानुभूतिः ।
मातापि तस्मिन्गुरुदेवबुद्धिर्न तं विना जीवति सा क्षणं च ॥ १८ ॥

तदधुना तज्जीवनरक्षैव नः कर्तुमुचिता । तस्माद्भो गङ्गादास, भवद्वचसि तस्याः प्रत्ययोऽस्ति त्वया तथा कथनीयं यथासौ जीवनेन न वियुज्यते ।

**गङ्गादासः**—यथाज्ञापयन्ति भवन्तः । (इति निष्कान्तः ।)

**गदाधरः**—(सकरुणम् ।) भो नाथ,

गतो यामो यामावहह गतवन्तौ बत गता
　अमी यामा हा धिग्दिनमपि गतप्रायमभवत् ।
क्रमादाशापाशस्त्रुटति बत हा सार्धमसुभि-
　स्तथापि त्वद्वार्ता न हि गतवती श्रोत्रपदवीम् ॥ १९ ॥

(इति मुह्यति ।)

**वक्रेश्वरः**—

त्यक्त्वा नः किमु यास्यसीति करुणासिन्धो गतायां निशि
　प्रेमाधिक्यपरिप्रकाशसरसां नानानुकम्पां व्यधाः ।

---

१. परिकरालंकारोऽत्र. तल्लक्षणं यथा साहित्यदर्पणे—'उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः' इति.

कारुण्यं तव तच्च कीदृशमहो भूयस्युपेक्षा च वा
कीदृक्के बत हृत्पते द्वयमिदं हे नाथ लोकोत्तरम् ॥ २० ॥

(इति मुह्यति ।)

**मुरारिः**—(सक्षोभम् ।)

आहार्यं धैर्यं क्रियते बहिर्यत्क्षिणोति तद्बाष्पभरोऽन्तरस्थः ।
पुनः पुनर्बद्धमपि प्रवृद्धः सेतुं यथा सैकतमम्बुपूरः ॥ २१ ॥

(इति फूत्कृत्य रुदन्भूमौ निपतति ।)

**श्रीवासः**—(तमालोक्य ।) अतिगभीरोऽयं दुर्निवारानुरागतारल्यः संप्रवृत्तः । भवत्येव ।

पयःप्रपूरः स्थिर एव तावत्करोति यावन्न हि सेतुभङ्गम् ।
भग्ने तु सेतावतिदुर्निवारः समस्तमाप्लावयितुं समर्थः ॥ २२ ॥

भो नाथ विश्वंभर, कासि कासि ।

पूर्वं मृतः कथमहो बत जीवितोऽहं
भूयोऽपि मारयसि किं बत जीवयित्वा ।
दुर्लीलता तव विभो न मनोऽधिगम्या
नन्वीश्वरो भवति केवलबाललीलः ॥ २३ ॥

(इति रोदिति ।)

**मुकुन्दः**—

नालोक्यते तव मुखं नयनेन किं नो
नाकर्ण्यते तव वचः श्रवणेन वा किम् ।
हे प्राणनाथ भगवंस्त्वदुपेक्षितानां
कष्टेन वा किममुना हतजीवितेन ॥ २४ ॥

**जगदानन्दः**—(सबाष्पम् ।)

नास्मादृशैस्तव पदाम्बुजसङ्गहीनै-
र्जीविष्यते क्षणमपीति मनो न आसीत् ।
लज्जामहे दयित हे तत एव देव
जीवाम एव दिवसांस्त्वदनीक्षणेऽपि ॥ २५ ॥

(इति मूर्च्छति ।)

दामोदरः—हा प्राणनाथ, क्वासि क्वासि ।

प्राणा न किं व्रजत मुञ्चत जाड्यमुच्चैः
प्राणेश्वरश्चरति सांप्रतमेक एव ।
तत्पादपङ्कजमुपेत्य भजध्वमद्धा
प्रेमात्मनामहह मास्तु कुले कलङ्कः ॥ २६ ॥

(इति मूर्च्छति ।)

हरिदासः—अहो कष्टम् ।

प्राणेश्वरेण सह चेत्सहसा न जग्मुः
प्राणाः पुनर्झटिति नैव भवन्ति गन्तुम् ।
धिक्कारकोटिकटुतामनिशं सहन्ते
सीदन्ति नैव वहतस्त्ववसादयन्ति ॥ २७ ॥

भवतु । क्षणमवगच्छामि ।

यदि नयनयोः पन्थानं मे न याति स ईश्वरो
यदि करुणया नो दृक्पातं करोति स मद्विधे ।
कुलिशकठिनानां वोऽसूनां सहस्रमपि क्षणा-
त्तृणमिव परित्यक्ष्याम्यञ्जस्तदङ्घ्रिपरीप्सया ॥ २८ ॥

(इति धैर्यमवष्टभ्य चिन्तां नाटयति ।)

विद्यानिधिः—

प्रेमन्नमोऽस्तु भवते यदकैतवेन
नोत्पद्यसे क्वचन हा बत किं ब्रवीमि ।
तस्मिन्नकैतवकृतेऽपि सकैतवस्त्वं
नो चेत्कथं नु मम जीवनयोग एषः ॥ २९ ॥

(इति भूमौ पतितो विह्वलः सन्रोदिति ।)

मुरारिः—(धैर्यमवष्टभ्य ।) हंहो महानुभावाः, विचारयत किमेकाकिनैव प्रभुणा क्वापि गतम्, किं वा कश्चिदन्योऽपि गत इति ।

अद्वैतः—अयं विचारः कथमुत्पद्यताम् ।

न गच्छन्पथि केनापि स दृष्टो गौरचन्द्रमाः ।
विद्युत्पुञ्ज इवाकस्माद्दृशोरविषयं गतः ॥ ३० ॥

मुरारिः—अस्त्युपायो विचारस्य ।

सर्वे—कथमिव ।

मुरारिः—आत्मवर्गमध्ये विचार्यताम् । कोऽत्र न वर्तते ।

सर्वे—सम्यगुक्तमेतेन । (इति मिथो विचारयन्ति ।)

मुरारिः—अहो, मयाकलितम् ।

सर्वे—तत्किम् ।

मुरारिः—नित्यानन्दमहानुभाव आचार्यरत्नश्च ।

सर्वे—कुत इदमुपयुज्यते ।

मुरारिः—एतावति कष्टे यद्यत्र तावभविष्यतां तदात्रैवागमिष्यताम् ।

सर्वे—(किंचिदाश्वस्य ।) अहो, अस्माकं यथा तथा भवतु । स चेदेकाकी न भवति तेनैव किंचिदाश्वस्तमस्माभिः ।

अद्वैतः—अये मुकुन्द, त्वमनया वार्तया मातरमाश्वासय—'मातः, तं प्रति चिन्ता न कार्या । नित्यानन्दाचार्यरत्नाभ्यां कार्यविशेषार्थे क्वापि देवेन गतमस्ति । समागतप्रायोऽयम्' इति वक्तव्यम् ।

मुकुन्दः—यथाज्ञापयति । (इति निष्क्रान्तः ।)

अद्वैतः—हंहो विश्वंभरदेवप्रियाः, किंचिद्धैर्यमिव जातं चेतसः । यतस्तावुभावेवाभियुक्तौ तयोः सतोः स्वतन्त्रोऽपि भगवानस्वातन्त्र्यं न करिष्यति । हन्त, किमुद्देश्यं तस्य यदर्थमिदमध्यवसितम् ।

तीर्थाटनं चेत्किमपह्नवेन गन्तुं समर्थाः सह तेन सर्वे ।
तयोर्विशेषप्रणये हितं चेदत्रापि तत्संभवितुं च योग्यम् ॥ ३१ ॥

(इति सर्वे क्षणं चिन्तयन्तस्तूष्णीं तिष्ठन्ति ।)

(नेपथ्ये ।)

हन्त भोः, कष्टम् ।

हा धिक्कष्टमहो दिनत्रयमभूद्वार्तापि तैर्न श्रुता
ते जीवन्ति मृता न किं किमथवा दत्ताश्रया मूर्छया ।

संत्यज्य प्रियमीश्वरं बत विधे दृष्ट्वा च तं तादृशं
प्रत्यावृत्तिपरः कथं नु पुरतस्तेषां भविष्याम्यहम् ॥ ३२ ॥

तदिहैव स्थित्वा शरीरत्याग एव यतनीयम्।

सर्वे—(श्रुतिमभिनीय।) अहो, आचार्यरत्नस्येव स्वरः श्रूयते। बाष्पगद्गदतया सम्यङ् नालक्षि। तन्निपुणमवधारयाम। (इति सर्वेऽवधानं नाटयन्ति।)

(पुनर्नेपथ्ये।)

हन्त हन्त, किमिति पामरेण मया तत्सङ्गे न गतम्। अथवा।

शिव शिव हठः कर्तुं शक्यो न हि प्रभुणा समं
निजमभिमतं स्वेषां चित्ते प्रवर्तयति प्रभुः।
प्रकटयति हि स्वीयं सूर्यः स्वकान्तमणौ महो
न विघटयितुं शक्नोत्येष स्वदाहकरं च तत् ॥ ३३ ॥

सर्वे—(आकर्ण्य।) सत्यमेवायमाचार्यरत्नः। तन्मन्यामहे भगवन्तं विमुच्य समागतोऽयम्। यतः 'शिव शिव हठः कर्तुं शक्यो न हि प्रभुणा समम्' इति निगदति। हन्त भोः, भर्जितमिव दुर्दैवदवदहनज्वालया कथमप्यासादितमाश्वासबीजम्।

मुरारिः—एवं मन्ये नित्यानन्ददेवः सङ्गे वर्तते। अयं कार्यान्तरायात्र प्रेषित इव।

अद्वैतः—किं तावदस्यात्र कार्यम्। न तावद्वित्ते प्रयोजनं यदर्थमयमागमिष्यति। न मातरि च तथा ममत्वम्। यत्तामेव सान्त्वयितुं प्रहेष्यति। न तादृगस्मादृशां सौभाग्यम्। यदस्मांल्लालयितुं प्रस्थापयिष्यति। तदलमनया विचिकित्सया। तन्न वेद्मि किमपरं फलं धृतमस्ति मादृशां दुर्दैवविषभूरुहेण। (इति सचिन्तस्तिष्ठति।)

(पुनर्नेपथ्ये।)

हा कष्टम्, पामर एवास्मि। यतः।

पश्चात्पश्चात्कथमनुसृतं नैव हा हन्त दृष्ट्वा
तादृग्रूपं कथमिव दृशौ हन्त तापैर्न दग्धे।

याहीत्युक्ते सति भगवता जीवितं किं न यातं
हा हा विश्वंभर तव तया मायया वञ्चितोऽस्मि ॥ ३४ ॥

सर्वे—(आकर्ण्य। नेपथ्याभिमुखम्।) निरीक्षामहे। मातः परं विलम्ब्यताम्। (इति तद्वीक्षमाणास्तिष्ठन्ति।)

(ततः प्रविशत्याचार्यरत्नः।)

आचार्यरत्नः—

क्व च स्निग्धश्यामः कुटिलकचपाशः क्व स विधिः
क्व च श्रोणीभारः क्व शिव शिव कौपीनमपि तत्।

(क्षणं स्थित्वा परामृश्य।)

प्रतीतिर्द्रष्टॄणां परमियमहो वस्तु नहि त-
त्समस्तस्याधारात्मनि चिति[1] समस्तं स्फुरति हि ॥ ३५ ॥

सर्वे—(उपसृत्य सोत्कण्ठम्।) आचार्य, कथय कथय। क्वासौ भगवान्।

आचार्यरत्नः—हन्त भोः, किमेष पामरः कथयतु।

अद्वैतः—कथय किं वृत्तम्।

आचार्यरत्नः—(कर्णे।) एवमेव।

अद्वैतः—हन्त, कथमयं करेण पिधापनीयोऽर्थः। तत्स्फुटं कथय। सर्वे शृण्वन्तु। (इति सबाष्पमुच्चैः।)

तास्ताः कीर्तननृत्यकौतुककला हा धिक्समाप्तिं गता-
स्तास्ताः प्रेमविलासहासमधुरा वाचः स्थिता नो हृदि।
सा प्रीतिः करुणा च सा शिव शिव स्मृत्येकशेषाभव-
त्संन्यासेन तव प्रभो विरचितः सर्वस्वनाशो हि नः ॥ ३६ ॥

(सर्वे आकर्ण्य मोहं नाटयन्ति।)

(प्रविश्य सत्वरम्)

गङ्गादासः—आचार्य, कथय कल्याणिनो देवस्य कल्याणमित्येषा पृच्छति भगवन्माता।

(आचार्यो बाष्परुद्धकण्ठस्तिष्ठति।)

---

१. चैतन्ये.

अद्वैतः—मन्नाम्ना तां ब्रूहि।

रामस्य विपिनवासः कृष्णस्य च माथुरं गमनम्।
अस्य च संन्यासविधिस्त्रितयं मातृत्रयस्य सोढव्यम्॥ ३७॥

गङ्गादासः—हंहो तयाप्येतदनुमितमस्ति पुरैव। उक्तं च—

किं गोप्यते भवद्भिः स खलु ज्येष्ठस्य वर्त्म शिश्राय।
लोकोत्तरचरितानां तुल्ये काठिन्यकारुण्ये॥ ३८॥

अद्वैतः—भवत्येवमेवासौ धैर्यवती। कथमन्यथा तादृशः पुत्रः। (क्षणं स्थित्वा विमृश्य।) भवत्येवम्।

संन्यासकृच्छमः शान्तो निष्ठाशान्तिपरायणः।
इति नामानि देवोऽयं यथार्थान्यधुनाकरोत्॥ ३९॥

अपि च।

अस्मिन्नेव हि भगवति यथार्थमभवन्महावाक्यम्।
मुख्यार्थतया हि तया जहदजहत्स्वार्थलक्षणा नात्र॥ ४०॥

आचार्य, आमूलतः कथय।

आचार्यः—हन्त, एतदर्थमेव जीवितं मया। तदितो निशावसाने नृत्योपरमसमय एव मत्करमालम्ब्य कतिचित्पदानि गच्छन्नग्रे नित्यानन्ददेवमालोक्य 'त्वमप्येहि' इति सङ्केतं कृत्वा सुरधुनीमुत्तीर्य चलितवान्। मयोक्तम्—'देव, कथय कथमेकाकिना कुत्र गम्यते' इति। तदनाकलयंस्तूष्णीमेव चलन्ननुपदमावाभ्यामनुगम्यमान एव काँटोयानामानं ग्राममासाद्य केशवभारतीयतीन्द्रमुपसेदिवान्। तदावाभ्यामात्मगतमेव विचिन्तितम्—'भगवांस्तुर्याश्रमं परिजिघृक्षुः' इति चिन्तयित्वापि प्रभुतेजसा पराभूताभ्यां न किंचिदपि वक्तुमशक्यत। परेद्यवि 'आचार्यरत्न, त्वयैतस्य कर्मणः पूर्वक्रिया क्रियताम्' इत्युक्तेन मया भगवानवादि—

१. जहत्स्वार्थलक्षणा, अजहत्स्वार्थलक्षणा चेति. एतयोरेव लक्षणलक्षणा, उपादानलक्षणेति नामान्तरम्. तयोर्लक्षणं यथा साहित्यदर्पणे—'अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये। उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥ मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये। स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा॥' इति,

'तत्किं कर्म' इति । तदनु गदितं भगवता—'मयैतत्कर्तव्यम्' इति । समनन्तरं प्रतिपत्तिमूढेन मया मूकवदनुत्तरेण रोदितुमेव प्रवृत्तम् । समनन्तरमनायत्त्यैव विधिवद्विहितं सकलमेव कर्म । ततो यद्वृत्तं तद्वाचा वक्तुं न शक्यते ।

सर्वे—(आकर्ण्य सविषादम् ।) हा देव, कथमिदमध्यवसितम् । अथवा मद्विधानामेव दुःखद्रुमफलकालविलसितमिदं किमनुयोज्यन्ते प्रभुचरणाः । हन्त हन्त स्मरणदशारूढमपि तन्नो मनः कृन्तति । कथमाचार्य, भवता दृष्टम् । (इति वैक्लव्यं नाटयन्ति ।)

अद्वैतः—किं तावत्तदाश्रमसमुचितं नामाङ्गीकृतं भगवता ।

आचार्यः—'कृष्णचैतन्यः' इति ।

अद्वैतः—(सचमत्कारम् ।) अहो, समुचितमेवैतत् ।

कृष्णस्वरूपं चैतन्यं कृष्णचैतन्यसंज्ञितः ।
अत एव महावाक्यस्यार्थो हि फलवानिह ॥ ४१ ॥

केशवभारती हि श्रुतिरेव तस्याः केशवस्य भारतीत्वात् । यथा—

'मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मकः'

इति । अतः केशवभारतीप्रतिपादितं श्रुतिप्रतिपाद्यमेवेति । तत्कथयाचार्य, कथय ।

किं तत्रास्ति किमन्यतः स भगवान्

आचार्यः—

तत्कालमेव प्रभु-
र्धृत्वा मैस्करिभूमिकां चलितवान्

अद्वैतः—

त्वां नो किमप्युक्तवान् ।

आचार्यः—

प्रेमान्धः स्खलिताङ्घ्रिरस्रुसलिलैर्निर्धौतवक्षःस्थलः
स्वात्मानं च न वेद हन्त किमसौ हा हन्त मां वक्ष्यति ॥ ४२ ॥

---

१. संन्यासिवेषम्.

अद्वैतः—भवान्कथं नानुगतः ।

आचार्यः—

नित्यानन्दस्त्वकथयदिदं यामि देवस्य पश्चा-
त्पश्चादेनं पथि पथि परिभ्राम्य तैस्तैरुपायैः ।
अद्वैतस्यालयमपि नयाम्येष याहि त्वमेतां
वार्तामार्तानुपहर सुखं प्रापयाद्वैतमुख्यान् ॥ ४३ ॥

अद्वैतः—धन्योऽसि नित्यानन्ददेव, धन्योऽसि । जितं भवता निष्कैतवसौहृदेन । तदागच्छतानया वार्तया । भगवतीं शचीमाश्वास्य वयमपि समुचितमाचराम ।

(इति निष्क्रान्ताः सर्वे ।)

इति संन्यासपरिग्रहो नाम चतुर्थोऽङ्कः ।

---

पञ्चमोऽङ्कः ।

(ततः प्रविशति श्रीकृष्णचैतन्यः, पश्चान्निलानन्दश्च ।)

श्रीकृष्णचैतन्यः—

एतां समास्थाय परात्मनिष्ठामध्यासितां पूर्वतमैर्महद्भिः ।
अहं तरिष्यामि दुरन्तपारं तमो मुकुन्दाङ्घ्रिनिषेवयैव ॥ १ ॥

(इति स्खलितं नाटयति ।)

नित्यानन्दः—(स्वगतम् ।) अहो, अद्भुतम् ।

प्रेमामृतं किल तथाविधमेव किंतु
निर्वेदखेददहनेन [1]शृतत्वमेत्य ।
आवर्त्यमानमिव गच्छति पिण्डभावं
कालेऽस्य हृद्व्रण इव व्यथनाय भावि ॥ २ ॥

तदेकाकिना मया किं क्रियते । भवतु । चिन्तयामि । (इति पुनर्निरूप्य ।) अहो, अद्भुतम् ।

नृत्योर्मिकः प्रकटितमहोल्लासहुंकारघोषः
स्वेदस्तम्भप्रभृतिविलसद्भावरत्नावलीकः ।

---

१. क्वथितम्.

अन्तर्वेगः समजनि विभोः सोऽयमानन्दसिन्धु-
र्नो जानीमः परिणतिरहो भाविनी कीदृगस्य ॥ ३ ॥

अहो बलवता वातेन चालितः केशरपरागपुञ्ज इव चलत्येषः । मयापि सत्वरेणानुगन्तुं न शक्यते । विरतसकलेन्द्रियवृत्तिस्तत इत एव गच्छन्नस्ति न तूद्देश्यपुरःसरं क्वापि । तथा हि ।

अपन्थाः पन्था वा न भवति दृशोरस्य विषयः
किमुच्चं नीचं वा किमथ सलिलं वा किमु वनम् ।
प्रभिन्नोऽयं वन्यो गज इव चलत्येव न पुनः
पुरो वा पश्चाद्वा कलयति न चात्मानमपि च ॥ ४ ॥

भवति हि ।

आत्मारामाः किमपि दधते वृत्तिहीनेन्द्रियत्वं
प्रेमारामा अपि भगवतो रूपमात्रैकमग्नाः ।
स्वानन्दस्थो भवति यदि चेदीश्वरोऽपि क्व भेदो

आं, ज्ञातम् ।

निम्नानन्दो भवति भगवाञ्जीव आनन्दनिम्नः ॥ ५ ॥

तदिदानीं किं करोमि । (इति क्षणं स्थित्वा ।)

नाहारोऽद्य दिनत्रयं न च पयःपानं किमन्याः क्रियाः
कौपीनैकपरिच्छदो निजसुखावेशैकमात्रानुगः ।
गच्छन्नेव दिनं निशामपि विभुर्नो वेत्ति किं कुर्महे
हे गौराङ्ग कृपानिधे कुरु कृपामार्ते मयि प्रीयताम् ॥ ६ ॥

(क्षणं स्थित्वा ।) एतेन किंचिदाश्वस्तमपि भवति चेतः । तद्यथा ।

आनन्दवैवश्यमिदं महाप्रभोर्बभूव नः संप्रति जीवनौषधम् ।
विश्रामयन्वर्त्म विवेचनाक्षमं नेष्येऽहमद्वैतविभोर्गृहानमुम् ॥ ७ ॥

(इति साश्वासमनुगच्छति ।)

(नेपथ्ये 'हरिं वद, हरिं वद' इति संभूय कोलाहलः ।)

**नित्यानन्दः**—(पुरोऽवलोक्य ।) अये, अद्भुतमिदम् । यदमी गोरक्षबाला

भगवन्तमालोक्य सकौतुकादरभक्तिश्रद्धानन्दचमत्कारं 'हरिं वद, हरिं वद' इत्युच्चैर्जल्पन्ति ।

(भगवान्पूर्वाभ्यासेन हरिध्वनिं श्रुत्वा किंचिदानन्दसुप्तोत्थित इव हरिध्वन्यनुसारिणीं दिशं नयनकमले समुन्मील्यावलोकयति ।)

**नित्यानन्दः**—(निरूप्य ।) अहो, उपकृतं गोरक्षडिम्भैः, यदमीषां हरिध्वनिमाकर्ण्य किंचित्तरामानन्दनिद्रोत्थित इवायं महामन्त्राकृष्ट इव फणिदष्टस्तमेव पन्थानमनुसर्पति ।

**भगवान्**—(उपसृत्य ।) ब्रूत भोः, ब्रूत हरिम् । (इति पुनः पुनः प्रजल्पति ।)

(प्रविश्य गोरक्षकाः शिशवः परितो दण्डवन्नत्वा करतालिकाभिर्हरिसंकीर्तनं कुर्वन्ति । भगवान्सस्पृहमाकर्णयन्मुहूर्तं प्रस्थानतो विरमति ।)

**नित्यानन्दः**—(सानन्दम् ।)

उन्माद आनन्दकृतो हि नानाचापल्यकृज्जाड्यकृदप्यमन्दम् ।
चापल्यजाड्योभयकृच्च कश्चित्कश्चिद्ग्रहग्रस्ततया समानः ॥ ८ ॥

तदिदानीं चरमावस्थ इव भगवत आनन्दोन्मादो जातः । तथा हि ।

उन्मील्य दृशौ पश्यति न किमपि विपर्यीकरोत्येषः ।
अर्धबधिर इव किंचिच्छृणोति न तदर्थमुपयाति ॥ ९ ॥

**भगवान्**—(पाणिकमलेन तेषां शिरः परामृश्य ।) अये, साधु कीर्तितं भवद्भिर्भगवन्नाम । कृतार्थीकृतश्चाहम् । तज्जानीत वृन्दावनं केन पथा गम्यते ।

**नित्यानन्दः**—(सहर्षम् ।) अयमवसरो मम । (इति तेषां मध्यादेकमानीय ।) तात, एष मार्गो वृन्दावनस्येति कथय ।

**बालकः**—जह आणवेदि भअवं । (इत्युपसृत्य ।) भो भअवं, एसो मग्गो बुन्दावणस्स । (क) (इति नित्यानन्दोपदिष्टमार्गं दर्शयति ।)

(भगवान्सानन्दावेशं तमेव मार्गमनुक्रामति ।)

(शिशवः प्रणम्य निष्क्रामन्ति ।)

**नित्यानन्दः**—हन्त, निस्तीर्णोऽस्मि । संप्रति संपत्स्यते मे मनोरथः । यदनेन पथैवाद्वैतवाटीमासादयितुं शक्यते । (इति तेन पथा तमनुगच्छन्क्रिय-

(क) यथाज्ञापयति भगवान् । भो भगवन्, एष मार्गो वृन्दावनस्य ।

दूरं गत्वा सपरामर्षम्।) अहो, कथमहं न परिचीये परपरिचयदशा किंचित्तरामिवास्य जातास्ति। तत्परीक्षे च निजसौभाग्यम्। (इति निकटमुपसर्पति।)

**भगवान्**—('एतां समास्थाय परात्मनिष्ठाम्' (५।१) इत्यादि पुनः पठित्वा।) अहो सम्यग्गीतं भिक्षुणा—'मुकुन्दसेवयैव तमस्तरिष्यामि न त्वनया परात्मनिष्ठया। अस्या आस्थामात्रं कार्यं न त्वेषैवोद्देश्या'। तद्वृन्दावनं गत्वा मुकुन्दसेवैव मानसीकर्तव्या। (इत्याकाशे लक्ष्यं बद्ध्वा।) हंहो, कियद्दूरे वृन्दावनम्।

**नित्यानन्दः**—(उपसृत्य।) देव, दिवसैकप्राप्यमस्ति वृन्दावनम्।

**भगवान्**— (स्वप्नजाग्रतोरन्तरालदशामापन्न इव सचमत्कारम्।) कथमहो श्रीपादनित्यानन्दोऽसि।

**नित्यानन्दः**—देव, स एवाहम्। (इत्यर्धोक्ते बाष्परुद्धकण्ठस्तिष्ठति।)

**भगवान्**—श्रीपाद, कथय कुतो भवन्तः।

**नित्यानन्दः**—देवस्य वृन्दावनजिगमिषामाश्रित्य मयापि तद्दिदृक्षया चलता भगवत्सङ्गो गृहीतः।

**भगवान्**—भद्रं भोः, भद्रम्। एहि। सहैव गच्छाव। (इति सानन्दं गच्छति।)

**नित्यानन्दः**—भगवन्, इतः। (इति कियद्दूरं नीत्वा।) भगवन्, इतः कियद्दूरे यमुना भगवती वर्तते, तदवगाहनं कर्तुमुचितम्।

**भगवान्**—हन्त, यमुनाद्य विलोकितव्या।

**नित्यानन्दः**—अथ किम्।

**भगवान्**—(हर्षं नाटयित्वा।) श्रीपाद, क्व सा।

**नित्यानन्दः**—इत इतः। (इति कियद्दूरं नीत्वा गङ्गामासाद्य।) भगवन्, इयं यमुना।

**भगवान्**—(सानन्दं प्रणम्य स्तौति।)

चिदानन्दभानोः सदा नन्दसूनोः परप्रेमपात्री द्रवब्रह्मगात्री।
अघानां लवित्री जगत्क्षेमधात्री पवित्रीक्रियान्नो वपुर्मित्रपुत्री॥ १०॥

**नित्यानन्दः**—भगवन्, अवगाह्यतामियम्।

भगवान्—यथारुचितम्। (इति स्नानमभिनयति।)

नित्यानन्दः—(स्वगतम्।) अहो, निर्वृतोऽस्मि महामत्तवन्यकुञ्जरो मन्त्रेणैव वशीकृतः। तत्परिशेषमस्य कर्मणः किमप्यस्ति। तदपि संपादयामि। (इति परितोऽवलोक्य कंचिदाह्वयति।)

(प्रविश्य कश्चित्पुरुषः प्रणमति।)

नित्यानन्दः—(जनान्तिकम्।) अये, इदमनतिदूरे पारेगङ्गं भगवतोऽद्वैतस्य पुरम्। त्वमितस्त्वरितं गत्वा विज्ञापय—'नित्यानन्दः केनचिदन्येन संन्यासिना सह निकटवर्ती भवन्तमपेक्षते। तत्त्वरताम्'।

पुरुषः—एषोऽहं तथा करोमि। (इति सत्वरं निष्क्रान्तः।)

नित्यानन्दः—(स्वगतम्।) अहो, अद्य दिनत्रयं जातम्। जलस्पर्शोऽपि न जातः। तदहमपि स्नामि। (इति तथा करोति।)

(नेपथ्ये।)

आशापाशद्विगुणवलितैस्तद्गुणैरेव बद्धाः
प्राणा नो यद्विरहविधुरा हन्त गन्तुं न शेकुः।
संप्रत्येतैरुपकृतमहो तन्मुखं दर्शयद्भि-
र्दिष्टे हीष्टे भवति सहसा हन्त वामोऽप्यवामः[1] ॥ ११ ॥

नित्यानन्दः—(दूरादाकर्ण्य।) अहो, आचार्य एवायं प्रस्तौति। तत्सुविहितमेव विधिना। अतः परं ममातिभारो लघूभूतः। (भगवन्तमालोक्य।) अहो कष्टम्।

अम्भःस्यन्दैः स्तिमितवपुषं लज्जयाभ्यासहानेः
कौपीनाच्छादनमपि न निर्गाल्य निःसारिताम्बुम्।
देवं रक्ताम्बुजदलचयैश्छाद्यमानोत्तमाङ्गं
स्नानोत्तीर्णं करिवरमिव स्वर्णगौरं निरीक्षे[2] ॥ १२ ॥

तदाकलयामि कियान्विलम्बोऽद्वैतागमनस्य। (इति पुरोऽवलोकयति।)

---

१. सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः. तल्लक्षणं साहित्यदर्पणे यथा—'सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्यं च कारणेनेदं कार्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः॥' इति. २ उपमालंकारश्चात्र.

(ततः प्रविशति उत्कण्ठां नाटयन्परितोऽपरिमितपरिवारोऽद्वैतः ।)

**अद्वैतः**—(पुरोऽवलोक्य ।) अहो, अयमयं देवः ।

चूडावियोगादरुणेन वाससा दूरादसौ चेदनसाविवेक्ष्यते ।

तथापि हेमप्रतिमेन तेजसा लावण्यभूम्नापि स एव भाति नः ॥ १३ ॥

अहो अतिरम्यम् ।

रक्ताम्बरं कनकपीतमिदं तदेव
देवस्य पश्यत वपुः सदृशीकरोति ।
गौरारुणस्य परिपक्वमहारसस्य
वैराग्यसारसहकारफलस्य लक्ष्मीम् ॥ १४ ॥

(इति त्वरमाण उपसृत्य ध्यानामीलितनयनस्य भगवतः पुरतोऽवस्थाय मुक्तकण्ठं रोदिति ।)

**भगवान्**—(सत्वरमक्षिणी समुन्मील्य ।) कथममी अद्वैताचार्यमहानुभावः ।

**नित्यानन्दः**—भगवन्, एवमेतत् ।

**भगवान्**—(गाढं परिष्वज्य ।) कथय कथमिहस्थोऽहं भवद्भिरवगतः, कथं वा ममानुपदमेव भवानपि वृन्दावनमनुप्राप्तः । अथ वा ममैवायं स्वप्नः ।

**अद्वैतः**—(सबाष्पमात्मगतम् ।) अहो, देवस्यात्र वृन्दावनप्रतीतिरेव जातास्ति । (प्रकाशम् ।) देव, नायं ते स्वप्नः । अपि तु स एवाहं पामरः । (इति स्खलितं नाटयति ।)

**देवः**—(बाहुभ्यामालिङ्ग्योत्थापयन् । सबाष्पम् ।) भवतु । भो अद्वैत, त्वमेव वृन्दावनं त्वय्यनवरतं भगवत्पादकमलसंयोगात् । तत्कथय कुत्रागतोऽसि ।

**अद्वैतः**—इयं भगवती भागीरथी । इदमिदंपारे[1] मदीयं पुरम् ।

**भगवान्**—(बहिर्वृत्तिं नाटयित्वा ।) श्रीपाद, भवता यमुनेयमित्यभाणि ।

**नित्यानन्दः**—अस्यां यमुना वर्तते न देव एव जानातु ।

**भगवान्**—श्रीपादस्य नाट्येनैव नाटितोस्मि ।

(अद्वैतः 'आशापाश–' (५।११) इत्यादि यच्छब्दे तच्छब्दे च त्वच्छब्दं दत्त्वा पुनः पठति ।)

---

१. अस्याः पारे.

नित्यानन्दः—भो अद्वैत, अस्य दण्डग्रहणावधि ममैव दण्डो जातः, दिनत्रयमाहारविरहात्। देवस्य तु स्वानन्दभोगेनैव तृप्तिः। तदलमत्र कथाप्रसङ्गतुङ्गिम्ना।

अद्वैतः—(परिजनकरात्प्रलम्बकौपीनाच्छादने आनीय पुनर्भगवन्तं स्नापयित्वा ग्राहयति सकरुणम्।)

देवोचितं च परिधापितमस्ति पूर्वं
भिक्षूचितं च वसनं परिधापयामि।
लक्ष्मीः समा तव समश्च मुखप्रसादो
हा हन्त नो नयनयोर्विषमं तदेतत्॥ १५॥

तदिदमनतिदूरमेव मे भवनम्। तदलंकर्तुमर्हन्ति भगवच्चरणाः।

भगवान्—एतदर्थमेव श्रीपादेनाहं प्रतारितोऽस्मि।

अद्वैतः—भगवान्कस्यापि प्रतार्यो न भवति। किंतु।

ईशोऽपि स्यात्प्रकृतिविधुरः स्वीयया माययैव
स्वच्छन्दोऽपि स्फटिकमणिवत्संनिकृष्टेन योगात्।
इत्थं केचिद्वयमिह किल ब्रूमहे बालखेला-
प्रायं लीलाविलसितमहो सर्वमीशस्य सत्यम्॥ १६॥

उभयथैव न प्रतार्योऽसि। अस्य च नैष दोषः श्रीपादत्वात्। श्रियं पातीति श्रीपः कृष्णः तमाददातीति तथैवानेन कृतं तदग्रे भवन्तु भगवन्तः। अद्य प्राथमिकी भिक्षा ममैवालये भवतु भगवतः।

भगवान्—यथारुचितं भवते। तदादिश पन्थानम्।

अद्वैतः—इत इतः। (इति नावमारोपयति।)

नित्यानन्दः—(आकर्ण्य।) भो अद्वैत, नवद्वीपे कश्चित्प्रहितोऽस्ति।

अद्वैतः—अथ किम्। सर्वे समागतप्राया एव।

भगवान्—भो अद्वैत, अपूर्वं नो भवद्भवनगमनम्।

अद्वैतः—श्रीवासस्येव क मे तादृशं सौभाग्यम्। यस्य भवने प्रतिदिनमेव देवितं देवेन।

नित्यानन्दः—भो अद्वैत, अतः परं महीयसी लोकयात्रा भाविनी।

स्वयंप्रकाशिनी हि भगवद्वार्ता। तत्रापि भगवतो मथुरागमनं प्रथितमस्ति। संप्रति तद्भवनसुभगंभावुकभावुके भगवति सर्व एवाबालवृद्धतरुणाः करुणापारावारमधुनैवामुमवलोकयितुं समागमिष्यन्ति लोकाः। तद्यावत्तेषां तथाप्रचारेण न भूयते तावदलक्षिता एव भवद्भवनं प्रविशाम।

**अद्वैतः**—एवमेव। (इति कतिचित्पदानि परिक्रम्य।) भो देव, इदमिदमस्मद्भवनम्। तावत्प्रविश। (इति सर्वे प्रवेशं नाटयन्ति।)

(नेपथ्ये।)

विश्वंभरः स भगवाञ्जननीं प्रतार्य
धृत्वा यतेरनुकृतिं मथुरां यियासुः।
व्याजेन शान्तिपुरमागमितः स नित्या-
नन्देन भोश्चलत भोश्चलतेक्षणाय॥ १७॥

**नित्यानन्दः**—(आकर्ण्य निरूप्य च।) अद्वैत, श्रुतं दृश्यतां च। तदिहत्या एवैते सपद्येव परःसहस्रा बभूवुः। कियता विलम्बेन लक्षसंख्या भविष्यन्ति। तदिह द्वारि दौवारिकैर्भूयताम्।

(अद्वैतः प्रतिद्वारि दौवारिकान्नियोज्य देवमग्रतः कृत्वा नित्यानन्देन सह प्रवेशं नाटयन्निष्क्रान्तः।)

(ततः प्रविशन्ति भगवद्दर्शनोत्कण्ठिताः पुरुषाः।)

**केचित्**—

नवद्वीपे यादृक्समजनि दृशोर्नः पदमसौ
तदन्याकारत्वं यदपि मनसः क्षोभजनकम्।
तथाप्युत्कण्ठा नः शिव शिव महत्येव वलते
ह्यनाहार्यं वस्तु प्रकृतिविकृतिभ्यां समरसम्॥ १८॥

तदधुना जानीम क्व भगवान्। (इति परितः परिक्रामन्ति।)

(अन्यस्यां दिशि)

**अन्ये**—

पूर्वाश्रमे मधुरिमप्रथिमा य आसी-
दस्येश्वरस्य सदृशोरतिथिर्न नोऽभूत्।

अद्यापि चेन्न स विलोक्यत एव तन्नो
धिग्जन्म धिग्वपुरहो धिगसून्धिगक्षि ॥ १९ ॥

अपरे—हन्त भोः, आगच्छतागच्छत। भगवानद्वैतपुरं प्रविष्ट इति श्रुतम्। तत्तत्रैव प्रविशाम। (इति सोत्कण्ठमुपसृत्य।) अहो, अमी दौवारिकाः सर्वानेव निवारयन्ति। भद्रममी एवानुनेयाः। दातव्यं च किंचिदेतेभ्यः। (इति निकटमुपसर्पन्ति।)

(ततः प्रविशन्ति वेत्रपाणयो द्वारोपान्तनिविष्टा दौवारिकाः।)

दौवारिकाः—अरे पुरुषाः, क्षणं विलम्बन्तां यावत्तुरीयाश्रमपरिग्रहः कृतो भगवता तावदनाहारेणैव स्थीयते। अद्यैव भिक्षा भविष्यति। तदधुना कोलाहलो न कार्यः। उपविश्य स्थीयतां भिक्षोत्तरं भगवानवलोकनीयः।

(नेपथ्ये।)

भगवन्, इत इतः।

दौवारिकः—निरूपयामि। (इति समुच्छ्रितं स्थलमारुह्य, उद्ग्रीविकमालोक्य च।) अये, कृतभिक्ष एव भगवान्। यदयम्

श्रीखण्डपङ्कपरिलिप्ततनुर्नवीन-
शोणाम्बरो धवलमाल्यविराजिवक्षाः।
हेमद्युतिर्विजयते हिमसांध्यराग-
गङ्गाप्रवाहरुचिभागिव रत्नसानुः[1] ॥ २० ॥

तदेते समुत्कण्ठिताः कथममुं द्रक्ष्यन्ति। (इति पुनर्निभाल्य।) अहो, साधु समाहितमद्वैतदेवेन यदनेनायमुच्चतरामुपकारिकामध्यरोपितो भगवान्। तदधुना सर्वे सुखं द्रक्ष्यन्ति स्वनाम च यथार्थमनयोपकारिकयाकारि।

(पुरुषाः सर्वे सोत्कण्ठं 'हरिं वद' इति संभूय निगदन्ति।)

(ततः प्रविशति यथानिर्दिष्टोपकारिकातलोपविष्टो भगवानद्वैतादयश्च।)

अद्वैतः—

केयं लीला व्यरचि भवता योऽयमद्वैतभाजा-
मत्यन्तेष्टस्तमधृत भवानाश्रमं यत्तुरीयम्।

---

१. उपमालंकारश्चात्र.

**भगवान्**—(विहस्य ।)

भो अद्वैत स्मर किमु वयं हन्त नाद्वैतभाजो
भेदस्तस्मिंस्त्वयि च यदियान्रूपतो लिङ्गतश्च ॥ २१ ॥

**अद्वैतः**—वागीश्वरेण किमुचितं वचनानुवचनम् ।

**भगवान्**—तत्ततोऽवधारयन्तु ।

विना सर्वत्यागं भवति भजनं न ह्यसुपते-
रिति त्यागोऽस्माभिः कृत इह किमद्वैतकथया ।
अयं दण्डो भूयान्प्रबलतरसो मानसपशो-
रितीवाहं दण्डग्रहणमविशेषादकरवम् ॥ २२ ॥

**अद्वैतः**—सर्वमिदं प्रतारणमेव । किंतु

'संन्यासकृच्छमः शान्तो निष्ठाशान्तिपरायणः'

इत्यादि नाम्नां निरुक्त्यर्थमेवैतत् ।

**दौवारिकः**—(पुरतः सर्वानवलोक्य ।) अहो, आश्चर्यम् ।

एतावत्यपि दुर्गमे जनघटासंघट्टनोच्चावचे
सर्वैरेव यथासुखं प्रभुरसौ परेपरार्द्धैर्नृभिः ।
अव्यग्रैरवकाशलम्भनसुखावस्थानसुस्थैर्यथा-
कामं लब्धतदीयपूर्णकरुणादृक्पातमुद्वीक्ष्यते ॥ २३ ॥

न हीदमसंवादि । यतः ।

उत्तीर्णोऽद्य भवाब्धिरद्य पिहितं द्वारं यमस्यापि च
प्राप्तं मानुषजन्मलम्भनफलं तप्तं च सर्वं तपः ।
यद्देवः करुणाकटाक्षसरसोऽदर्शीति सर्वैरहो
प्रत्येकं प्रथयद्भिरात्मसुभगीभावः समुद्घुष्यते ॥ २४ ॥

(नेपथ्ये परितः कोलाहलः ।)

**पुरुषाः**—अहो, अमी भगवज्जन्मस्थलीनिवासिनः सर्वे समागच्छन्ति । तदधुना महता संमर्देन भवितव्यम् । वयमित इदानीमपसराम । (इति सर्वे निष्क्रामन्ति ।)

(ततः प्रविशन्ति सर्वे नवद्वीपवासिनः ।)

ते—

अद्यान्ध्यं गतमेव नो नयनयोरद्य प्रसन्ना दिशः
शुष्काश्चाद्य जिजीविषाव्रततयः प्रोन्मीलयन्त्यङ्कुरान् ।
नष्टेऽन्तःकरणे च केनचिदहो चैतन्यमप्याहितं
येनास्माकमहो बताद्य भविता चैतन्यचन्द्रोदयः ॥ २५ ॥

(इति सोत्कण्ठमुपसर्पन्ति ।)

अद्वैतः—(आलोक्य ।)

अग्रे निधाय भगवज्जननीं समीयुः
श्रीवासपण्डितमुखाः सुहृदस्त एते ।
अन्ये च बालतरुणस्थविराः किमन्य-
द्देशः स एष उदपादि स एष कालः ॥ २६ ॥

(भगवान्सत्वरमवतारं नाटयति । दौवारिकाः सादरं प्रवेशयन्ति । भगवान्मातरं प्रणमति ।)

माता—(सभयभक्तिवात्सल्यपरितोषशबलिताश्रुपुलकगद्गदम् । संस्कृतेन ।)

वैराग्यमेव भव किं किमु वानुभूति-
र्भक्तिर्नु वा किमु रसः परमस्तनूभृत् ।
तात स्तनंधयतयैव भवन्तमीक्षे
लब्धोऽधुनापि न कदापि पुनस्त्यजामि ॥ २७ ॥

(इति सोत्कण्ठमालिङ्गति ।)

श्रीकृष्णचैतन्यः—

भगवति जगन्मातर्मातः परं फलमुत्तमं
किमपि फलितुं वात्सल्याख्या लता भवति क्षमा ।
भवति भवती विश्वस्यैवानुपाधिसुवत्सले-
त्यथ भगवता नूनं चक्रे क्षमापि शरीरिणी ॥ २८ ॥

(इति पुनः पठति ।)

(माता पुनरालिङ्ग्य प्रणमति । अद्वैतस्तामुत्थाप्य स्वयमन्तःपुरे प्रवेशयन्निष्क्रान्तः । भगवान्यथायथं सर्वानेवालिङ्गनस्पर्शनदर्शनप्रश्नादिभिरनुरञ्जयति ।)

---

१.-२.-३. हर्षसूचकमव्ययत्रयम्.

(पुनः सत्वरं प्रविश्य)

अद्वैतः—कः कोऽत्र भोः, सर्वानेवाबालवृद्धतरुणानाचाण्डालांश्च यथोपजोषमावासभक्ष्यपेयादिभिरुपचरन्तु भवन्तः।

(प्रविश्यापटीक्षेपेण।)

एकः—अयमयमहं तथा करोमि। (इति निष्क्रान्तः।)

अद्वैतः—(भगवन्तमुपसृत्य।)

सोऽहं त एते स भवान्स चैषां प्रेमा तवेयं करुणापि सैव।
सर्वं तदेवास्ति सुखैकहेतुरन्यादृशं रूपमतोपहेतुः॥ २९॥

भगवान्—अद्वैताद्वैत, मैवम्।

श्यामामृतस्रोतसि पातितं वपुस्तस्यैव तुङ्गेन तरङ्गरंहसा।
यां यां दशामेति शुभाशुभाथवा सा सैव मे प्रेम चरीकरोति॥ ३०॥

तदेहि। चिरदृष्टैरेभिः सहरसा उपविशाम।

(इति निष्क्रान्ताः सर्वे।)

इत्यद्वैतपुरविलासो नाम पञ्चमोऽङ्कः।

---

षष्ठोऽङ्कः।

(ततः प्रविशति रत्नाकरः[1]।)

रत्नाकरः—अहो, अद्य कथमकस्मात्प्रेयसी सुरसरिद्विमनस्केव दृष्टा[2]। तदस्या मनोदुःखकारणं प्रष्टव्यमस्ति। (इति पुरोऽवलोक्य।) कथमियं तदवस्थैव दृश्यते देवी। तदुपसृत्य पृच्छामि। (इत्युपसर्पति।)

(ततः प्रविशति यथानिर्दिष्टा गङ्गा।)

गङ्गा—हद्दी हद्दी। जस्स पाअसेअसलिलत्तेण मह एदारिसं सोहग्गं तस्स पहुणो चिरआलं अङ्गसङ्गो लम्भिओ। अदो वरो को मे भाअधेओ। तह तं लम्भिअ पुणोविण लम्भणिज्जो विअ दीसइ। अदो वरं वा किं मे असुहम्। ता किं करेमि मन्दभाइणी। (क) (इति चिन्तयन्ती क्षणं तिष्ठति।)

---

(क) हा धिक् हा धिक्। यस्य पादसेकसलिलत्वेन ममैतादृशं सौभाग्यं तस्य प्रभोश्चिरकालमङ्गसङ्गो लब्धः। अतोऽपरः को मे भागधेयः। तथा तं

---

१. समुद्रः. २. गङ्गा.

रत्नाकरः—(उपसृत्य ।) भागीरथि, कथं विमनायसे ।

गङ्गा—अज्जउत्त अज्जउत्त, किं पुच्छसि। मन्दभाइणी क्खु अहम् । (क)

रत्नाकरः—कथमिव ।

गङ्गा—(संस्कृतेन ।)

यत्पादशौचजलमित्यलमस्मि विश्व-
विख्यातकीर्तिरसकौ रसकौतुकीशः ।
नित्यावगाहकलया रसयांचकार
मामद्य स त्यजति हा बत तेन दूये ॥ १ ॥

रत्नाकरः—आं जानामि । स खलु मथुरागमनतः प्रत्यावृत्य संप्रत्यद्वैतालये समागतोऽस्तीति श्रुतम् । तत्कथं दूयसे ।

गङ्गा—होइ, एवं णेदम् । किंतु णअद्दीअदो आअदेसु सिरिवासपहुदिएसु बन्धुवग्गेसु अण्णस्सिं दिअहे सिरिसईदेईए पाइअं अण्णं सव्वेहिं अप्पवग्गेहिं सह सरसहासविलासं भुञ्जिअ तेहिं ज्जेव सद्धं उपविसिअ भअवं किंपि गदिदुं पउत्तो । (ख)

रत्नाकरः—किं तत् ।

गङ्गा—

भो अद्वैतप्रभृतय इदं श्रूयतां यज्जनन्या
युष्माकं च प्रणयिसुहृदामाज्ञया न प्रयातम् ।
विघ्नस्तेन व्यजनि मथुरां गन्तुमीशो न तस्मा-
दाज्ञां सर्वे ददतु कृपया हन्त यायामिदानीम् ॥ २ ॥

रत्नाकरः—ततस्ततः ।

---

लब्ध्वा पुनरपि न लम्भनीय इव दृश्यते । अतःपरं वा किं मेऽशुभम् । तस्मात्किं करोमि मन्दभागिनी ।

(क) आर्यपुत्र आर्यपुत्र, किं पृच्छसि । मन्दभागिनी खल्वहम् ।

(ख) भवति, एवमिदम् । किं तु नवद्वीपत आगतेषु श्रीवासप्रभृतिकेषु बन्धुवर्गेष्वन्यस्मिन्दिवसे श्रीशचीदेव्या पाचितमन्नं सर्वैरात्मवर्गैः सह सरसहासविलासं भुक्त्वा तैरेव सार्धमुपविश्य भगवान्किमपि गदितुं प्रवृत्तः ।

**गङ्गा**—तदो अद्दईआचारिएण गदिदम् । (क)

तव प्रीत्या याहीत्यभिलपति सर्वो यदि जन-
स्तदा सर्वस्यैव त्वदुपगमनात्पूर्वमसवः ।
न धिक्कारान्सोढुं बत भवति नः पाटवमिति
प्रयास्यन्त्येवामी प्रथममनुभूय व्यसनिताम् ॥ ३ ॥

**रत्नाकरः**—भद्रं भो अद्वैत, भद्रम् । ततस्ततः ।

**गङ्गा**—तदो भअवदा सप्पणअं पुणोवि भणिदम् । (ख) 'भो अद्वैतप्रभृतयः' ( ६।२ ) इति ।

गृहीतोऽयं वेशो यदिह निजदेशस्य सविधे
तदा स्थातुं सार्धं प्रणयिभिरिदानीमनुचितम् ।
बुधा यूयं विज्ञा भवति जननी चास्य वपुषः
समाधां कुर्वन्तु स्वयमहह किं वच्मि बहुलम् ॥ ४ ॥

**रत्नाकरः**—भगवतापि समीचीनमुक्तम् । ततस्ततः ।

**गङ्गा**—तदो सव्वेहिं भअवदो बन्धुजनेहिं आचारिओजणणीए सईदेईए णिअडं गदुअ मन्तिदम् । (ग)

**रत्नाकरः**—ततस्ततः ।

**गङ्गा**—अस्सिं अत्थे जदो कस्सवि सम्मई ण होइ तदो जणणीए उत्तम् । भो भो, जइ धम्मदोसो होइ तदो अप्पणो सुहकए तस्स खलअणकिदा किंवदन्ती कधं करणिज्जा । अप्पणो जह तह होउ । तदो जअण्णाहछेत्तं ज्जेव जं गच्छदि तं ज्जेव भद्दम् । कदाचि पउत्तीवि लहीअदित्ति आसा होइ । (घ)

---

(क) ततोऽद्वैताचार्येण गदितम् ।

(ख) ततो भगवता सप्रणयं पुनरपि भणितम् ।

(ग) ततः सर्वैर्भगवतो बन्धुजनैराचार्यजनन्याः शचीदेव्या निकटं गत्वा मन्त्रितम् ।

(घ) अस्मिन्नर्थे यदा कस्यापि संमतिर्न भवति तदा जनन्या उक्तम् । भो भोः, यदि धर्मदोषो भवति तदात्मनः सुखकृते तस्य खलजनकृता किंवदन्ती कथं

**रत्नाकरः**—साधु मातः, साधु। अतिक्रान्तास्ति भवत्या देवहूतिः। ततस्ततः।

**गङ्गा**—तदो सव्वे ज्जेव विवसा हुविअ पुणोवि गदिदवन्तो। (क) मातः, कथमिदमुक्तम्। अतः परमस्माभिरिदं श्रुतिप्रतिपादितमिव खण्डितुं न शक्यते भवद्वचः।

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो तए गदिदम्। अम्हाणं जह तह होउ। अस्स दोसं जं खलजणो पेक्खिस्सदि तं क्खु दुस्सहम्। जअण्णाहं जइ गच्छदि तदो मज्झे तुम्हे गन्तुं सक्कध। मए पउत्ती लहीअदि। (ख)

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो सव्वे भअवदो णिअडं आअदुअ देईए कधिदं णिअदिदवन्तो। (ग)

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो भअवं सहरिसअं गदिदवं। (घ) यथाज्ञापयति विश्वजननी तदाज्ञापयत। गच्छामि।

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो सव्वेहिं गदिदम्। (ङ) देव, कियन्ति दिनानि स्थीयताम्। पश्यामस्ते चरणकमलमिति।

**रत्नाकरः**—ततस्ततः।

---

करणीया। आत्मनो यथा तथा भवतु। ततो जगन्नाथक्षेत्रमेव यद्गच्छति तदेव भद्रम्। कदाचित्प्रवृत्तिरपि लक्ष्यत इत्याशा भवति।

(क) तदा सर्वे एव विवशा भूत्वा पुनरपि गदितवन्तः।

(ख) तदा तया गदितम्। अस्माकं यथा तथा भवतु। अस्य दोषं यत्खलजनः प्रेक्षिष्यते तत्खलु दुःसहम्। जगन्नाथं यदि गच्छति तदा मध्ये यूयं गन्तुं शक्नुत। मया प्रवृत्तिर्लक्ष्यते।

(ग) तदा सर्वे भगवतो निकटमागत्य देव्या कथितं निगदितवन्तः।

(घ) ततो भगवान्सहर्षं गदितवान्।

(ङ) ततः सर्वैर्गदितम्।

**गङ्गा**—तदो जणणीए ताणं च पमोअत्थं तिण्णदिणाणि तत्थ ठाऊण पूव्वं विअ भअवदीए जणणीए अच्चुदाणन्दजणणीए च पाइदं अण्णं सव्वेहिं सह भुञ्जिअ ताणं अणुरञ्जिअ चउत्थे दिअहे गन्तुं पउत्ते सव्वेहिं मन्तिअ णित्ताणन्द जअदाणन्द-दामोदर-मुउन्दाओ सङ्गे दिण्णाओ। तदो गदेसु णअद्दीअवासिसु तेहिं सद्धं देवे पत्थिदे अद्दईआचारिएण वहुदरं रोइदम्। देवो तं अणामन्तिअ चलिदो। (क)

**रत्नाकरः**—हन्त, इदानीं गौडाधिपतेर्यवनभूपालस्य [1]गजपतिना सह विरोधे गमनागमनमेव न वर्तते। कथमयं चतुर्भिरेव परिजनैः सह गच्छति।

**गङ्गा**—(संस्कृतमाश्रित्य।) आर्यपुत्र, नैतदाश्चर्यम्। पश्य पश्य।

योऽन्तर्यामी भवति जगतां योऽयमव्याजबन्धु-
र्यस्य द्वेष्यो न जगति जनः कोऽपि के तं द्विषन्तु।
[2]द्वैराज्येऽस्मिन्पटुविकटयोः सेनयोरेव मध्या-
न्निष्प्रत्यूहं कलय चलितो बन्धुभिः पञ्चषैः सः॥ ५॥

अपि च।

ग्रामे ग्रामे पटुकपटिनो घट्टपाला य एते
येऽरण्यानीचरगिरिचरा [3]वाटपाटच्चराश्च।
शङ्काकाराः पथि विचलतां तं विलोक्यैव साक्षा-
दुद्यद्बाष्पाः स्खलितवपुषः क्षोणिपृष्ठे लुठन्ति॥ ६॥

**रत्नाकरः**—भवति हि भगवान्सहजासुरभावभावितान्तःकरणानेव नानन्दयति। तदितरान्परमपामरानपि दृक्पातेन पवित्रयति चित्रयति च भक्तिरसेन।

---

(क) ततो जनन्या तेषां च प्रमोदार्थं त्रीणि दिवसानि तत्र स्थित्वा पूर्वमिव भगवत्या जनन्या अच्युतानन्दजनन्या च पाचितमन्नं सर्वैः सह भुक्त्वाताननुरज्य चतुर्थे दिवसे गन्तुं प्रवृत्ते सर्वैर्मन्त्रित्वा नित्यानन्द-जगदानन्द-दामोदर-मुकुन्दाः सङ्गे दत्ताः। ततो गतेषु नवद्वीपवासिषु तैः सार्धं देवे प्रस्थितेऽद्वैताचार्येण बहुतरं रोदितम्। देवस्तमनामन्त्र्य चलितः।

---

१. उत्कलाधीश्वरेण. २. गौडोत्कलराज्यद्वयमध्ये. ३. मार्गतस्कराः.

रत्नाकरः—ततस्ततः ।

गङ्गा—तदो णिरन्तरसंचरन्तगअवइमहासामन्तसन्तदि महादन्तावलतुङ्गतुरङ्गपत्तिसंपत्ति दुग्गमं राअपहं उज्झिअ वणमग्गं ज्जेव अअगाहिअ चलिदवन्तो । (क)

रत्नाकरः—ततस्ततः ।

गङ्गा—(संस्कृतेन ।) ततः ।

आश्चर्यं प्रागहह गहनं गाहमाने रघूणां
पत्यौ द्वीपिद्विरदमहिषा गण्डकाश्चण्डकायाः ।
तत्कोदण्डप्रतिभयहता दुद्रुवुर्ये त एते
यन्माधुर्यद्रवलवलभः स्तब्धतामेव दध्रुः ॥ ७ ॥

एवं कियन्ति दिणाणि वणे वणे चलन्तो विविहतरुलदासोहग्गमणुगेण्हन्तो पुणोवि राअपहं अङ्गीकिदवं । (ख)

रत्नाकरः—कुतः ।

गङ्गा—(संस्कृतेन ।)

रेमुणानगरमण्डलमूर्तिर्वेणुपाणिभगवत्प्रतिमूर्तिः ।
प्राक्तनीति बहुमानत आसीद्वन्दनार्थमथ राजपथस्थः ॥ ८ ॥

रत्नाकरः—प्राक्तनीति कोऽर्थः ।

गङ्गा—अअं क्खु देओ चउब्भुअरूअदोवि दुअभुअरूओ गोवीणाहं ज्जेव भत्तेहिं भअणीअं त्ति भणन्ति केवि । केवि भणन्ति—पुराअणी चउब्भुअमुत्ती ज्जेव दीसइ सव्वत्थले ज्जेव । ण क्खु दुअभुअरूआ गोवीणाहमुत्ती पुराअणीत्ति । (ग)

---

(क) ततो निरन्तरसंचरद्गजपतिमहासामन्तसंतति महादन्तावलतुङ्गतुरङ्गपत्तिसंपत्ति दुर्गमं राजपथमुज्झित्वा वनमार्गमेवावगाह्य चलितवान् ।

(ख) एवं कियन्ति दिनानि वने वने चलन्विविधतरुलतासौभाग्यमनुगृह्णन्पुनरपि राजपथमङ्गीकृतवान् ।

(ग) अयं खलु देवश्चतुर्भुजरूपतोऽपि द्विभुजरूपो गोपीनाथमेव भक्तैर्भजनीयमिति भणन्ति केऽपि । केऽपि भणन्ति —पुरातनी चतुर्भुजमूर्तिरेव दृश्यते सर्वस्थल एव । न खलु द्विभुजरूपा गोपीनाथमूर्तिः पुरातनीति ।

**रत्नाकरः**—ते भ्रान्ताः । कटकादौ साक्षिगोपालादयोऽतिप्राचीना एव । ततः ।

**गङ्गा**—(संस्कृतेन ।)

दण्डवद्भुवि निपत्य ववन्दे तां स सापि तमपूजयदुच्चैः ।
अस्य मूर्ध्नि पततालमकस्माच्छेखरेण शिरसः स्खलितेन ॥ ९ ॥

**रत्नाकरः**—ततस्ततः ।

**गङ्गा**—(संस्कृतेन ।) ततो भगवता सप्रेम किंचिदुपश्लोकितम् । तथा हि ।

न्यञ्चत्कफोणिनमदंसमुदञ्चदग्रं
तिर्यक्प्रकोष्ठकियदावृतपीनवक्षाः ।
आरज्यमानवलयो मुरलीमुखस्य
शोभां विभावयति कामपि वामबाहुः ॥ १० ॥

किंच ।

आकुञ्चनाकुलकफोणितलादिवाधो-
लब्धस्रुता मधुरिमामृतधारयैव ।
आप्लावयन्क्षितितलं मुरलीमुखस्य
लक्ष्मीं विलक्षयति दक्षिणबाहुरेषः ॥ ११ ॥

**रत्नाकरः**—ततस्ततः ।

**गङ्गा**—पुणोवि वणमग्गं लम्भिअ पुणोवि साच्छिगोपालदंसणत्थं कडअणामधेयं राअधाणीं गओ । (क)

**रत्नाकरः**—दर्शनीय एवायम् । यः खलु प्रतिमाकार एव वस्तुतस्तु स्वयं भगवान् । यतः ।

साक्षित्वेन वृतो द्विजेन स चलंस्तस्यैव पश्चाच्छनैः
श्रीमत्कोमलपादपद्मयुगलेनारान्नदन्नूपुरम् ।
दृष्टस्तेन निवृत्तकन्धरमहो माहेन्द्रदेशावधि
प्राप्यैव प्रतिमात्वमत्वरमनास्तत्रैव तस्थौ प्रभुः ॥ १२ ॥

---

(क) पुनरपि वनमार्गं लब्ध्वा पुनरपि साक्षिगोपालदर्शनार्थं कटकनामधेयां राजधानीं गतः ।

ततश्चिरेण गजपतिमहाराजेन पुरुषोत्तमदेवेनायमानीय स्वराजधान्यां स्थापितः।

**गङ्गा**—एवं नेदम्। (क)

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो तं आलोइअ अप्पणो हिअआदो णिक्कमिअ पुरदो अवट्ठिदं विअ मण्णमाणो पुणोवि तत्थ सअं पविसन्तो विअ मुहुत्तं आसि। (संस्कृतेन।) अथ किंचिदुपश्लोकितं च।

शोणस्निग्धाङ्गुलिदलकुलं माद्यदाभीररामा-
वक्षोजानां घुसृणरचनाभङ्गरिङ्गत्परागम्।
चिन्माध्वीकं नखमणिमहःपुञ्जकिञ्जल्कमालं
जङ्घानालं चरणकमलं पातु नः पूतनारेः॥ १३॥

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो सव्वेहिं एव्वं ज्जेव दिट्ठम्। (ग)

**रत्नाकरः**—कीदृशमिव।

**गङ्गा**—(संस्कृतेन।)

वेणुवादनपरोऽपि स वेणुं स्वाधरात्क्षणमधो विनिधाय।
तेन सार्धमिव वर्धितशुद्धश्रद्धमीहितकथोऽयमलोकि॥ १४॥

**रत्नाकरः**—ततस्ततः।

**गङ्गा**—तदो तं दिणं तत्थ ज्जेव ठाऊण अवरस्सिं दिणे सिरिपुण्डरीअणअणो दट्ठव्वोत्ति गुरुईए उक्कण्ठाए घोणन्तहिअओ विअ तुरिअं पत्थिदो। (घ)

---

(क) एवमिदम्।

(ख) ततस्तमालोक्यात्मनो हृदयतो निष्क्रम्य पुरतोऽवस्थितमिव मन्यमानः पुनरपि तत्र स्वयं प्रविशन्निव मुहूर्तमासीत्।

(ग) ततः सर्वैरेवमेव दृष्टः।

(घ) ततस्तद्दिनं तत्रैव स्थित्वा अपरस्मिन्दिवसे श्रीपुण्डरीकनयनो द्रष्टव्य इति गुर्व्या उत्कण्ठया घूर्णितहृदय इव त्वरितं प्रस्थितः।

**रत्नाकरः**—ततस्ततः ।

**गङ्गा**—तदो कमलपुरणामं गामं लम्भिअ किअणईसिणाणे भअवदो देवउलं पेक्खिदुं अग्गदो गच्छन्तम्मि देवे णिअकरट्ठिअं देवस्स दण्डं णिच्चाणन्ददेएण किं एदेण अआण्डूवप्लवखण्डेण दण्डेणत्ति भञ्जिअ णईमज्झम्मि णिक्खित्तो । (क)

**रत्नाकरः**—ततस्ततः ।

**गङ्गा**—तदो मुउन्दो भअवदो जअण्णाहस्स देवउलं पेक्खिअ भअवन्तं गदिदवं । (ख) देव, पश्य पश्य ।

उत्क्षिप्तः किमयं भुवा दिनमणेराकर्षणार्थं भुजः
पातालात्किमु सत्यलोकमयितुं शेषः समभ्युत्थितः ।
किं वा नागफणामणीन्द्रमहसां राशिर्जिहाणो दिवं
दिव्यं देवकुलं प्रभोरिदमिदं भो देव विद्योतते ॥ १५ ॥

**रत्नाकरः**—देवि, सर्वमधिगतम् । कथमत्र विमनायते भवती । मत्सौभाग्ये सौभाग्यवती भवती । पश्य पश्य ।

यदर्थं बद्धोऽहं शिव शिव यदर्थं च मथित-
स्तदीयस्तातोऽसाविति न गणितं येन विभुना ।
अहो कीदृग्भाग्यं मम हि स हरिस्तां च दयितां
परित्यज्यैवास्मत्तटवटकुटुम्बी समभवत् ॥ १६ ॥

तदेहि । निकटं गत्वैव पश्याव ।

**गङ्गा**—जहरुइदं अज्जउत्तस्स । (ग)

(इति निष्क्रान्तौ ।)

**प्रवेशकः ।**

---

(क) ततः कमलपुरनामानं ग्रामं लब्ध्वा कृतनदीस्नाने भगवतो देवकुलं प्रेक्षितुमग्रतो गच्छति देवे निजकरस्थितं देवस्य दण्डं नित्यानन्ददेवेन किमेतेन अकाण्डोपप्लवखण्डेन दण्डेनेति भङ्क्त्वा नदीमध्ये निक्षिप्तः ।

(ख) ततो मुकुन्दो भगवतो जगन्नाथस्य देवकुलं प्रेक्ष्य भगवन्तं गदितवान् ।

(ग) यथारुचितमार्यपुत्रस्य ।

(ततः प्रविशति वरनाविष्टो भगवान्परितश्च नित्यानन्दादयः।)

भगवान्—

अभ्रंलिहोऽपि जगतां हृदयं प्रविष्टः
स्थूलोऽपि लोचनयुगान्तरमभ्युपेतः।
सिद्धः शिलाभिरपि यो रसवर्षशाली
प्रासाद एष पुरतः स्फुरतीश्वरस्य॥ १७॥

(इति सोत्कण्ठं परिक्रामति।)

सर्वे—अहो, मुहूर्तमात्रगम्योऽयं पन्था दीर्घातिदीर्घ इव जायते भगवतः। किमत्र चिन्तयाम। भगवतो नीलाचलचन्द्रस्य विलोकनं परिचारकाणामेव सुलभं नान्येषाम्। विशेषतः पारदेशिकानामस्माकं दुर्लभमेव। विना राजपुरुषसाहाय्येन सुलभं न भवति।

मुकुन्दः—अस्त्युपायः।

अन्ये—कस्तावदसौ।

मुकुन्दः—अस्त्यत्र विशारदस्य जामाता सार्वभौमस्यावुत्तो भगवतः परमाप्ततमो गोपीनाथाचार्यः। यः खलु भगवतो नवद्वीपविलासविशेषाभिज्ञो युष्मद्विध इव।

अन्ये—तेन किं स्यात्।

मुकुन्दः—तेन सार्वभौमद्वारा सर्वमेव कारयितुं शक्यते।

सर्वे—(हर्षं नाटयित्वा।) साधूक्तम्। तर्हि तन्निलयः प्रथममन्वेष्टुमिष्टः।
(इति परिक्रामन्ति।)

(ततः प्रविशति गोपीनाथाचार्यः।)

गोपीनाथाचार्यः—(स्वगतम्।)

दक्षिणं स्फुरति मे विलोचनं सुप्रसादविशदं मनो मम।
वेद्मि नोऽद्य जगदीशदर्शनं कीदृशं सुखमुदीरयिष्यति॥ १८॥

(इति जगन्नाथदर्शनार्थं परिक्रामति।)

---

१. 'भगिनीपतिरावुत्तः' इत्यमरः.

**मुकुन्दः**—अयमेष गोपीनाथाचार्यः ।

**नित्यानन्दः**—मुकुन्द, शीघ्रं गच्छ गच्छ यावदसौ सिंहद्वारं न प्रविशति ।

(मुकुन्दस्तथा करोति ।)

**गोपीनाथाचार्यः**—(अग्रतोऽवलोक्य ।) अये, कोऽयम् । अपि कश्चिद्गौडीयो भविष्यति । (निभाल्य ।) अये नावद्वीपः । (पुनर्निभाल्य ।) अये, भगवतो विश्वंभरस्य प्रियसेवको मुकुन्द एव । ततः फलितं शकुनेन । (उपसृत्य ।) हंहो, मुकुन्दोऽसि ।

**मुकुन्दः**—आचार्य, वन्दे ।

**गोपीनाथाचार्यः**—अपि कुशलं भगवतः ।

**मुकुन्दः**—इहैवागताः प्रभुचरणाः ।

**गोपीनाथाचार्यः**—(सानन्दम् ।) किं वदसि । क्व क्व । (इति पुनस्तमालिङ्गति ।)

(मुकुन्दस्तमादाय प्रत्यावर्तते ।)

**गोपीनाथाचार्यः**—(अग्रतोऽवलोक्य ।) मुकुन्द, कोऽयं यतीन्द्रः ।

(मुकुन्दः सर्वं कथयति ।)

**गोपीनाथाचार्यः**—(साश्चर्यम् ।)

यः केवलं प्रेमरसस्तदासीत्स एव वैराग्यरसेन मिश्रः ।
स्वादस्तथाप्येष दृशोस्तथैव चित्तस्य नोऽयं मधुराम्लरूपः ॥ १९ ॥

**मुकुन्दः**—(उपसृत्य ।) भो देव, श्रीजगन्नाथदेवेनैव भगवन्तमभ्यागमयितुं प्रतिनिधिरिव प्रहितो गोपीनाथाचार्यः ।

**भगवान्**—(बहिर्वृत्तिं नाटयन् ।) क्वासौ क्वासौ ।

**गोपीनाथाचार्यः**—अयमस्मि । (इति चरणयोः पतति ।)

(भगवानालिङ्गति ।)

(गोपीनाथाचार्यो नित्यानन्दं प्रणम्य जगदानन्ददामोदरौ प्रणमति ।)

**मुकुन्दः**—आचार्य, कथमबाधं यथाकाममेव भगवतो जगन्नाथस्य दर्शनं संपद्यते ।

**गोपीनाथाचार्यः**—सार्वभौमस्य तथा सौभाग्योदयश्चेद्भवति।

**सर्वे**—तर्हि विज्ञाप्यतां स्वयमेव देवः।

**गोपीनाथाचार्यः**—स्वामिन्, विना सार्वभौमसंभाषणं श्रीजगन्नाथदर्शनं न सुलभमिति मन्यामहे। भगवतो वा कीदृगिच्छा।

**भगवान्**—भवदिच्छैव ममेच्छा।

**गोपीनाथाचार्यः**—तर्हि फलितं सार्वभौमस्य सुकृतद्रुमेण। देव, तदित इतः पदानि धारयन्तु भगवन्तः।

**भगवान्**—आदिश मार्गम्।

**गोपीनाथाचार्यः**—इत इतः।

(इति सर्वे परिक्रामन्ति।)

(ततः प्रविशति अध्यापयन्सशिष्यः सार्वभौमभट्टाचार्यः।)

**सार्वभौमभट्टाचार्यः**—कः कोऽत्र भोः, जानीत श्रीजगन्नाथस्य मध्याह्नधूपः संवृत्तो न वेति।

**गोपीनाथाचार्यः**—अयमयं भट्टाचार्यस्याध्यापनोपरमः संवृत्तः। संप्रत्यभ्यन्तरं यास्यति। तत्त्वरितमेवोपसर्पामि। (इति विचार्य।) भगवन्, इहैव क्षणं विश्रमितुमर्हति यावदहमागच्छामि। (इति सत्वरमुपसृत्य।) भट्टाचार्य, कोऽपि महानुभावः संप्राप्तोऽस्ति। तदभिगम्य समानीयतामिति।

**सार्वभौमभट्टाचार्यः**—कियद्दूरेऽसौ।

**गोपीनाथाचार्यः**—अभ्यर्ण एव।

(सार्वभौमभट्टाचार्य उत्थायाभिगच्छति। शिष्याश्चानुगच्छन्ति।)

**नित्यानन्दः**—अहो, अयमयं भट्टाचार्यः सार्वभौमः। यदयं स्वयमागतस्तर्हि साधीयानेव भवति।

**सार्वभौमभट्टाचार्यः**—(उपसृत्य।) नमो नारायणाय। (इति प्रणमति।)

**भगवान्**—कृष्णे रतिः कृष्णे मतिः।

**सार्वभौमभट्टाचार्यः**—(स्वगतम्।) अहो, अपूर्वमिदमाशंसनम्। तर्ह्ययं पूर्वाश्रमे वैष्णवो वा भविष्यति।

(शिष्याः स्मयन्ते ।)

**सार्वभौमभट्टाचार्यः**—स्वामिन्, इतः । (इति भगवन्तमादाय यथास्थानमुपवेश्य स्वयमप्युपविशति ।)

(सर्वे उपवेशं नाटयन्ति ।)

**सार्वभौमभट्टाचार्यः**—आचार्य, अयं पूर्वाश्रमे गौडीयो वा ।

**गोपीनाथाचार्यः**—भट्टाचार्य, पूर्वाश्रमे नवद्वीपवर्तिनो नीलाम्बरचक्रवर्तिनो दौहित्रो जगन्नाथमिश्रपुरंदरस्य तनुजः ।

**सार्वभौमभट्टाचार्यः**—(सस्नेहादरम् ।) अहो, नीलाम्बरचक्रवर्तिनो हि मत्तातसतीर्थाः । मिश्रपुरंदरश्च मत्तातपादानामतिमान्यः ।

**गोपीनाथाचार्यः**—श्रीजगन्नाथदर्शनसौलभ्यमेषामुद्देश्यमस्ति ।

**सार्वभौमभट्टाचार्यः**—सर्वथैव तद्भावि । कः कोऽत्र भोः, आहूयतां चन्दनेश्वरः ।

(प्रविश्य सत्वरं चन्दनेश्वरो भगवन्तं प्रणम्य पितरं प्रणमति ।)

**सार्वभौमभट्टाचार्यः**—चन्दनेश्वर, श्रीपादस्यानुपदं गच्छ । यथायं सुखेन प्रत्यहं यथाकामं श्रीमुखं पश्यति तथा सर्वैरेव विधेयम्, यथा केनापि बाधा न क्रियते । अयं मदीयो मान्यतम इति ।

**चन्दनेश्वरः**—यथाज्ञापयन्ति श्रीचरणाः ।

**सार्वभौमभट्टाचार्यः**—स्वामिन्, अत्र स्थीयताम् ।

(भगवान्नित्यानन्दादिभिः सह चन्दनेश्वरमादाय निष्क्रान्तः ।)

**सार्वभौमभट्टाचार्यः**—आचार्य, स्थीयताम् ।

(गोपीनाथाचार्योऽर्धनिष्क्रान्त एव मुकुन्दं हस्तेनाकृष्य प्रत्यावृत्योपविशति ।)

**सार्वभौमभट्टाचार्यः**—आचार्य, अमुमालोक्य स्नेहशोकतारल्यं जातम् । नीलाम्बरचक्रवर्तिसंबन्धादयमतीव स्नेहास्पदं नः । अल्पीयसि वयसि तुरीयाश्रमो गृहीतः कथमनेन । कस्तावदस्य महावाक्योपदेष्टा ।

**गोपीनाथाचार्यः**—केशवभारती ।

**सार्वभौमभट्टाचार्यः**—हन्त, कथमयं भारतीसंप्रदाये प्रवर्तितवान्वा ।

**गोपीनाथाचार्यः**—नास्य तथा बाह्यापेक्षा । केवलं त्याग एवादरः ।

सार्वभौमभट्टाचार्यः—किं तावद्बाह्यम् ।

गोपीनाथाचार्यः—संप्रदायोत्कर्षादि ।

सार्वभौमभट्टाचार्यः—समीचीनं नोच्यते । आश्रमौज्ज्वल्यं न बाह्यम् ।

गोपीनाथाचार्यः—केवलं गौरवायेति बाह्यमेतत् ।

सार्वभौमभट्टाचार्यः—गौरवेण किमपराद्धम् । तन्मयैवंभण्यते भद्रतर-सांप्रदायिकभिक्षोः पुनर्योगपट्टं ग्राहयित्वा वेदान्तश्रवणेनायं संस्करणीयः ।

गोपीनाथाचार्यः—(सासूयमिव ।) भट्टाचार्य, न ज्ञायतेऽस्य महिमा भवद्भिः । मया तु यद्यद्दृष्टमस्ति तेनानुमितमयमीश्वर एवेति ।

मुकुन्दः—(स्वगतम् ।) साधु भो आचार्य, साधु । दग्धं मे जीवितं निर्वापितमस्ति भवता ।

शिष्याः—केन प्रमाणेनेश्वरोऽयमिति ज्ञातं भवता ।

गोपीनाथाचार्यः—भगवदनुग्रहजन्यज्ञानविशेषेण ह्यलौकिकेन प्रमा-णेन । भगवत्तत्त्वं लौकिकेन प्रमाणे प्रमातुं न शक्यते अलौकिकत्वात् ।

शिष्याः—नायं शास्त्रार्थः । अनुमानेन न कथमीश्वरः साध्यते ।

गोपीनाथाचार्यः—ईश्वरस्तेन साध्यतां नाम । न खलु तत्तत्त्वं साधयितुं शक्यते । तत्तु तदनुग्रहजन्यज्ञानेनैव तस्य प्रमाकरणत्वात् ।

शिष्याः—क दृष्टं तस्य प्रमाकरणत्वम् ।

गोपीनाथाचार्यः—पुराणवाक्य एव ।

शिष्याः—पठ्यताम् ।

गोपीनाथाचार्यः—

अथापि ते देव पदाम्बुजद्वयप्रसादलेशानुगृहीत एव हि ।
जानाति तत्त्वं भगवन्महिम्नो न चान्य एकोऽपि चिरं विचिन्वन् ॥ २० ॥

विचिन्वन् इति शास्त्रादिवर्त्मसु ।

शिष्याः—तर्हि शास्त्रैः किं तदनुग्रहो न भवति ।

गोपीनाथाचार्यः—अथ किम् । कथमन्यथा विचिन्वन्नित्युक्तम् ।

शिष्याः—(विहस्य ।) तत्कथमेतावन्ति दिनानि वृथैव भवता पठितम् ।

**गोपीनाथाचार्यः**—शिल्पविशेष एव तत्।

**सार्वभौमभट्टाचार्यः**—(विहस्य।) भवति तदनुग्रहोऽस्ति जातः। तत्तत्त्वं तु भवता ज्ञायत एव। किंचित्कथ्यताम्।

**गोपीनाथाचार्यः**—तत्कथाविषयो न भवति। अनुभववेद्यमेव भवति चेदस्यानुग्रहस्त्वयि तदा भवतैवानुभाव्यम्।

**शिष्याः**—(स्वगतम्।) कथमयमसाध्वसमेवानेन सह व्यधिकरणं किंचिज्जल्पति, अथ वा आवुत्तोऽयमिति किंचित्परिहसतीव।

**गोपीनाथाचार्यः**—भट्टाचार्य, भवता यदेनमीश्वरमुद्दिश्य किंचिद्व्यधिकरणमुक्तम्, तेनासहिष्णुतया किंचिन्मयोक्तम्। न तावदतिगभीरैर्भवद्भिरेवमभिलपितुं युज्यते। अथवा नैष वो दोषः।

यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति।
कुर्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने॥ १२॥

**सार्वभौमभट्टाचार्यः**—(विहस्य।) ज्ञातम्। वैष्णवोऽसि।

**गोपीनाथाचार्यः**—(सप्रश्रयम्।) यद्यस्य कृपा स्यात्तदा त्वमपि भविष्यसि।

**सार्वभौमभट्टाचार्यः**—अलं पल्लवेन। भवान्गच्छतु भगवद्दर्शनानन्तरं मातृस्वसुरावासे। तवेश्वरः सगणो वास्यतां मन्नाम्ना भगवत्प्रसादेन निमन्त्रयितव्यश्च।

**गोपीनाथाचार्यः**—यथाज्ञापयसि।

**सार्वभौमभट्टाचार्यः**—तदहमपि माध्यंदिनकर्मणे प्रयामि। (इति सशिष्यो निष्क्रान्तः।)

**गोपीनाथाचार्यः**—मुकुन्द, एह्येहि। (इति परिक्रम्य।) भो मुकुन्द, भट्टाचार्यवाग्वज्रमद्यापि मे हृदयं कृन्तति। यदि परमकारुणिकेन भगवता तदुद्ध्रियते तदैव मे मनो निर्वाति।

**मुकुन्दः**—किमशक्यं तस्य भगवतः।

**गोपीनाथाचार्यः**—तदेहि। श्रीजगन्नाथदर्शनार्थं प्रयातं भगवन्तमनुसराव।

(इति निष्क्रांमतः।)

(नेपथ्ये ।)

अहो अद्भुतम् ।

तुङ्गभृङ्गयुवसंगतफुल्लपुण्डरीकवरलोचनलक्ष्मि ।
हिङ्गुलस्नपितशुक्लचतुर्थीशीतदीधितिकलाधरबिम्बम् ॥ २२ ॥

अपि च ।

चारुकारुणिकमारुचिराङ्गं ब्रह्मदारुमयमेतदुदेति ।
आहतोऽस्य रुचिकन्दलवृन्दैरिन्द्रनीलमणिदर्पणदर्पः ॥ २३ ॥

**गोपीनाथाचार्यः**—अये, श्रीमुखदर्शनं जातमिव यदमी नित्यानन्दादयो मिथो निर्वर्णयन्ति ।

(पुनस्तत्रैव ।)

अन्योन्येक्षणरागरञ्जिततया द्वौ निर्निमेषेक्षणौ
राजेते जगतः पती उभयतो निस्पन्दसर्वाङ्गकौ ।
दारुब्रह्मणि लीयते किमु नरब्रह्मैतदाहो नर-
ब्रह्मण्येव हि लीयते शिव शिव ब्रह्मैव वा दारवम् ॥ २४ ॥

**गोपीनाथाचार्यः**—भद्रं भोः, भद्रम् । एक एव भगवानास्वाद्यास्वादकभावेन द्विधाभूत इव ।

(पुनस्तत्रैव ।)

द्वावेव पूर्णकरुणौ जगदुद्दिधीर्षू
द्वावेव लोचनपथं जगतो जिहानौ ।
अन्तःस्थनन्दतनयोऽन्तरवर्तिदारु-
ब्रह्मेति केवलमियानुभयोर्हि भेदः ॥ २५ ॥

**गोपीनाथाचार्यः**—साधु भो नित्यानन्ददेव, साधु तत्त्वज्ञोऽसि भगवतो गौरचन्द्रस्य । तन्मन्ये भगवद्दर्शनं कृत्वा प्रत्यावर्तन्त एव सर्वे । तदावामपि भगवन्तं श्रीजगन्नाथं दृष्ट्वा त्वरितमेव पुनरेतावनुसराव ।

(इति निष्क्रान्तौ ।)

(ततः प्रविशति पुण्डरीकाक्षदर्शनानन्दनिःस्पन्दो भगवान्नित्यानन्दादयश्चन्दनेश्वरश्च ।)

**चन्दनेश्वरः**—हंहो महान्तः, संपन्नं यथासुखमेव भवतां भगवद्दर्शनम् ।

नित्यानन्दादयः—यथामनोरथमेव सुसंपन्नम्।

चन्दनेश्वरः—(स्वगतम्।) अहो, कथमसौ विलम्बते गोपीनाथाचार्यः। किमिदानीमहं करोमि। न किमपि निगदितं तातचरणैः। मन्ये तस्मै एव सर्वं कथितमस्ति। तत्कथमयमद्यापि नायातः। (इति परितोऽवलोकयति।)

(ततः प्रविशति त्वरां नाटयन्मुकुन्देन सहाचार्यः।)

गोपीनाथाचार्यः—एहि मुकुन्द, एतेऽमी गच्छन्ति। तदुभयमेव संवृत्तम्। [1]नीलाचलचन्द्रोऽपि दृष्टः, [2]हेमाचलगौरोऽपि दृश्यते। (इति सत्वरमुपसृत्य।) चन्दनेश्वर, त्वमितो गृहं गच्छ। अतः परं मयैव सर्वं समाधास्यते।

चन्दनेश्वरः—यथाह भवान्। (इति भगवन्तं प्रणम्य निष्क्रान्तः।)

(गोपीनाथाचार्य उपसृत्य देवं प्रणमति।)

दामोदरः—भगवन्, अयमाचार्यः प्रणमति।

भगवान्—(बहिर्वृत्तिं नाटयित्वा।) एह्येहि। (इति तमालिङ्गति।)

गोपीनाथाचार्यः—देव, भट्टाचार्येण सानुचर एव निमन्त्रितोऽसि। तदित एवागच्छन्तु। (इति पूर्वोद्दिष्टावासं प्रापय्य भगवतः पादधावनादिकं दन्तधावनावसानं सकलमेव परिचरणं कृत्वा भिक्षोत्तरं सुखनिविष्टे सति तस्मिन्सवैमनस्यम्।) देव, भट्टाचार्येणान्यदपि निमन्त्रितमस्ति।

भगवान्—किं तत्।

गोपीनाथाचार्यः—सांप्रदायिकसंन्यासिनः सकाशाद्योगपट्टं ग्राहयित्वा वेदान्तं श्रावयिष्यति।

भगवान्—अनुगृहीतोऽस्मि तेन। भवतु। एवं करिष्यामि।

मुकुन्दः—देव, आचार्येण तदवधि तेन वाक्स्फुलिङ्गनिकरेण दन्दह्यमानहृदयेन स्थीयते। महाप्रसादोऽपि नाद्य स्वीकृतोऽस्ति।

भगवान्—आचार्य, बालकोऽसि। यदयं मां प्रति स्निह्यति तेनैवेदमवादीत्। कथमत्र दूयसे।

---

१. जगन्नाथः. २. चैतन्यदेवः.

**गोपीनाथाचार्यः**—भगवन्, श्रीचरणैरिदं मे शल्यं हृदयादुद्ध्रियते चेत्तदा जीवितं धारयिष्ये। (इति रोदिति।)

**भगवान्**—पुण्डरीकाक्षस्ते मनोरथं पूरयिष्यति। दामोदर, भवतायं निमन्त्र्यताम्।

**दामोदरः**—यथाज्ञापयसि। (इति तमादाय निष्क्रामति।)

**भगवान्**—जगदानन्द, भगवतः पुण्डरीकाक्षस्य रजनीशेषशयनोत्थापनलीला यथा दृश्यते तथा यतनीयम्।

(प्रविश्याचार्येण सह।)

**दामोदरः**—भगवन्, यथाज्ञम्। महाप्रसादेन भोजितोऽयमत्रैव शिशयिपुरस्ति।

**भगवान्**—साधु साधु।

(इति सर्वे प्रियसंकथया मुहूर्तान्गमयन्ति।)

(नेपथ्ये पाणिशङ्खध्वनिः।)

**सर्वे**—(सचमत्कारम्।) अहो, यामशेषेव त्रियामा। यदयम्

पूर्वेव्याः शयनोत्थिताविव चलत्सर्वाङ्गभूषाकणः
किं वा देवकुलस्य वारणपतेरुद्बृंहितं बृंहितम्।
आयातेति कृपानिधेः किमु कृपादेव्या जगत्प्राणिना-
माह्वानध्वनिरभ्युपैति मधुरः श्रीपाणिशङ्खध्वनिः॥ २६॥

**भगवान्**—तदहो, अवितथमेव गतेयं रजनी। आचार्य, एहि। सहैव पुण्डरीकाक्षस्य शयनोत्थानावकाशं पश्याम।

**गोपीनाथाचार्यः**—यथाज्ञापयसि। (इति तत्समयोचितं कर्म कर्तुं निष्क्रान्तः।)

(प्रविश्य सत्वरः।)

**कश्चित्**—कः कोऽत्र भोः, गोपीनाथाचार्यः क वर्तते। वृत्तं तज्जानासि। (आकाशे लक्ष्यं बद्ध्वा।) किं ब्रवीषि—'आचार्यः श्रीकृष्णचैतन्यदेवस्य निकटे।' इति। भवतु। तत्रैव यामि। (इति कतिचित्पदानि गत्वा पुरोऽवलोक्य।) अहो, अयमेष आचार्यो भविष्यति। (इत्युपसर्पति।)

(ततः प्रविशत्याचार्यः ।)

**गोपीनाथाचार्यः**—अहो, जातप्रायोऽयं समयः शयनोत्थानस्य । तदहं त्वरयामि भगवन्तम् ।

**पुरुषः**—(उपसृत्य ।) आचार्य, भट्टाचार्यो विज्ञापयति श्रीकृष्णचैतन्यदेवो यथा भगवतो जगन्नाथदेवस्य शय्योत्थानं पश्यति तथा त्वयैव सङ्गे कृत्वा यतनीयम् ।

**गोपीनाथाचार्यः**—यथाज्ञं करवाणि । (इति श्रीकृष्णचैतन्यदेवं त्वरयितुमुपसर्पति ।)

(ततः प्रविशति सानुचरो देवः ।)

**देवः**—मुकुन्द, विलोक्यतां को विलम्ब आचार्यस्य ।

**गोपीनाथाचार्यः**—एषोऽहं भगवन्तं प्रतीक्षमाणो वर्ते ।

**भगवान्**—तदग्रे गम्यताम् ।

**गोपीनाथाचार्यः**—(तथा कृत्वा ।) भगवन्, इत इतः । (इति प्रवेशं नाटयित्वा जगन्मोहनमासाद्य ।) देव, पश्य ।

तत्कालीनकवाटवाटनिबिडोद्घाटे विनिष्क्रामता
गर्भागारगरिष्ठसौरभभरेणामोदमभ्युद्वमन् ।
निद्राभङ्गभृतालसो मुखमिव व्यादाय शेषेऽनिशो
जृम्भारम्भमिवातनोति स इयं प्रासाद एष प्रभोः ॥ २७ ॥

अपि च । देव, आश्चर्यमाश्चर्यम् ।

दीपाभावघनान्धकारगहने गम्भीरगम्भीरिका
कुक्षौ तल्पत उत्थितस्य जयतो लक्ष्मीपतेर्लोचने ।
कालिन्दीसलिलोदरे विजयिनी वातेन घूर्णायिते
प्रोन्मत्तभ्रमरावलीढजठरे सत्पुण्डरीके इव ॥ २८ ॥

(भगवान्गरुडस्तम्बस्य पश्चादवस्थाय सस्पृहं पश्यति ।)

**मुकुन्दः**—आचार्य, पश्य पश्य ।

क्षणात्प्रदीपावलयः समन्ताद्गम्भीरिकायाः कुहरे ज्वलन्त्यः ।
विलोचनोत्सारिभिरस्रपूरैर्न्यग्भूतभासो लिखिता इवासन् ॥ २९ ॥

**गोपीनाथाचार्यः**—पश्य पश्य ।

अनुवदनप्रक्षालनमभ्यङ्गस्नानभूषणाद्यमथ ।
अनुबालभोगलीला हरिवल्लभभोग एष तत्पश्चात् ॥ ३० ॥

दृश्यतामधुना प्रातर्धूपाख्यः पूजाविशेषः ।

(भगवानानन्दस्तिमित एव सपुलकास्रं पश्यत्येव ।)

**गोपीनाथाचार्यः**—भो भो जगदानन्दादयः, पश्यत पश्यत । प्रातर्धूपस्य प्रसादान्नं कियदञ्जलौ कृत्वा कश्चिन्मालां च करयोः कृत्वा कश्चिद्युगपदेव समागच्छतः । किमेतौ महाप्रभवे श्रीकृष्णचैतन्याय दास्यतः । केन वा प्रेरितावेतौ । अथ वा श्रीजगन्नाथेनैव ।

(प्रविश्य पार्षदौ श्रीकृष्णचैतन्यमुपसर्पतः । भगवानुपसृत्य मूर्धानमवनमयति । एको मालां प्रयच्छति । भगवान्बहिर्वासोऽञ्चलं प्रसारयति । अपरः प्रसादान्नं प्रयच्छति । भगवानञ्चले कृत्वा श्रीजगन्नाथं प्रणम्यैव सिंहवत्त्वरितगतिर्निष्क्रान्तः ।)

**सर्वे**—अहो, किमिदम् । कथमकस्मादेव देवो निष्क्रान्तः । तदागच्छत । क्वायं गच्छति विलोकयाम । (इति पुरान्निष्क्रम्य कतिचित्पदानि गत्वा पुरतो विलोक्य ।) अहो, भगवान्स्वावासवर्त्म त्यक्तवान् ।

**गोपीनाथाचार्यः**—(निभाल्य ।) अये दामोदरादयः, सार्वभौमालयं प्रति देवः प्रस्थितवान् । तत्फलितं भट्टाचार्यस्य सुकृतद्रुमेण । तद्दामोदरजगदानन्दौ भगवत्सङ्गे प्रयातं मुकुन्देन सार्धमहमासन्नस्थल एव तिष्ठामि ।

**उभौ**—यथारुचितं भवते । (इति निष्क्रान्तौ ।)

**गोपीनाथाचार्यः**—एहि मुकुन्द, सार्वभौमस्य द्वितीयकक्षायां तिष्ठाव । (इति तथा कृत्वा पुरोऽवलोक्य ।) अये, एतौ सार्वभौमभृत्यौ सविस्मयमित एवोपसर्पतः । तदपवार्य तिष्ठाव ।

(इति द्वारोपान्ते तिष्ठतः ।)

(ततः प्रविशतो भृत्यौ ।)

**एकः**—अले, एसे सण्णासी कंपि मोहणमन्तं जाणादि । जदो भट्टाचालिए इमिणा गहग्गत्थे विअ किदे । (क)

---

(क) अरे, एष संन्यासी किमपि मोहनमन्त्रं जानाति । यतो भट्टाचार्योऽनेन ग्रहग्रस्त इव कृतः ।

अन्यः—अले, कीलिसे किदे । (क)

प्रथमः—अले, ण आणासि । सेज्जाए अणुत्थिदे ज्जेव भट्टाचालिए एसे-अ अम्हादो सअंणघरदुआले गदे । तदो वडुएण कहिअम्—'भट्टाचालिअ भट्टाचालिअ, उत्थेहि उत्थेहि । से सण्णासी आअदो'त्ति । तदो धसमसिअ भट्टाचालिए उत्थिअ इमस्स चलणे पडिए । तदो इमिणा जहण्णाहस्स पसाअभत्तं हत्थे कदुअ 'भुङ्क्ष्व'त्ति गदिदवन्तो । तदो अम्हाणं ईसले उम्मत्ते विअ अकिअविचाले तक्खणमेत्तेण तं भत्तं गिलिअवन्ते अकिदसिणाणे ज्जेव अकिअंमुहपक्खालणे ज्जेव । गिलिऊण उम्मत्ते विअ कण्टइदसअलङ्गे णअणजलत्थिमिदवसणे घग्घलकण्ठसद्दे अवम्हाललोअविवसे विअ भविअ महीदले लुण्ठदि । किं हुविस्सदि ण आणेम्ह । (ख)

गोपीनाथाचार्यः—(आकर्ण्य ।) मुकुन्द, श्रुतम् ।

मुकुदः—तवानुतापेनैव देवेनेदमध्यवसितम् ।

भृत्यौ—आअच्छ । अम्हे गोपीणाहाचालिअं मग्गेम । (ग) (इति निष्क्रान्तौ)

गोपीनाथाचार्यः—भद्रं भोः, भद्रम् । यदाभ्यामहं न दृष्टः, तदितः स्थित्वा दामोदरजगदानन्दौ प्रतिपालयाव ।

(इति तथा कुरुतः ।)

---

(क) अरे, कीदृशः कृतः ।

(ख) अरे, न जानासि । शय्यातोऽनुत्थिते एव भट्टाचार्ये सति एषोऽकस्माच्छयनगृहद्वारे गतः । ततो बटुकेन कथितम्—'भट्टाचार्य भट्टाचार्य, उत्तिष्ठ उत्तिष्ठ । स संन्यासी आगतः' इति । ततो धसूमसिति शब्दं कृत्वा भट्टाचार्य उत्थाय अस्य चरणे पतितः । ततोऽनेन जगन्नाथस्य प्रसादभक्तं हस्ते कृत्वा 'भुङ्क्ष्व' इति गदितवान् । तदा अस्माकमीश उन्मत्त इव अकृतविचारस्तत्क्षणमात्रेण तद्भक्तं गिलितवान् अकृतस्नान एव अकृतमुखप्रक्षालन एव । गिलित्वा उन्मत्त इव कण्टकितसर्वाङ्गो नयनजलस्तिमितवसनो घर्घरकण्ठशब्दोऽपस्माररोगविवश इव भूत्वा महीतले लुठति । किं भविष्यति न जानीमः ।

(ग) आगच्छ । आवां गोपीनाथाचार्यं मार्गयाव ।

(ततः प्रविशति विस्मयं नाटयन्दामोदरः ।)

दामोदरः—

विना वारीं बद्धो वनमदकरीन्द्रो भगवता
　विना सेकं स्वेषां शमित इव हृत्तापदहनः ।
यदृच्छायोगेन व्यरचि यदिदं पण्डितपतेः
　कठोरं वज्रादप्यमृतमिव चेतोऽस्य सरसम्[1] ॥ ३१ ॥

गोपीनाथाचार्यः—(उपसृत्य ।) दामोदर, किं तत् ।

दामोदरः—अस्ति रहस्यम् । कथयिष्यामः । किंतु मया भवदर्थमित आगतम् । द्वारान्तरेण निष्क्रम्य लब्धावासं भगवन्तमनुसराम ।

(इति त्रयः कतिचित्पदानि परिक्रामन्ति ।)

(दामोदरः 'विना वारीम्' (६।३१) इत्यादि पठित्वा सर्वमेव कथयति ।)

गोपीनाथाचार्यः—श्रुतमेव सर्वं मिथः कथयतोस्तद्भृत्ययोः प्रमुखतः ।

दामोदरः—तवैव प्रसादादिदं तस्य सौभाग्यम् । तदेहि शीघ्रम् । भगवत्समीपमनुसराम । यदयं भट्टाचार्योऽपि कृताह्निकस्तत्रागतप्राय एव इदानीमस्याशयो गम्यः । तदिदानीं वाक्प्रयोग एव नाभूत् ।

(इति परिक्रामन्ति ।)

(ततः प्रविशति कृतासनपरिग्रहो भगवान्नित्यानन्दो जगदानन्दश्च ।)

भगवान्—जगदानन्द, कासौ गोपीनाथाचार्यः ।

जगदानन्दः—अयमयं दामोदरमुकुन्दाभ्यां त्वरमाण आचार्यः ।

गोपीनाथाचार्यः—(उपसृत्य ।) जयति जयति परमकारुणिकः ।

जगदानन्दः—अहो, कथमयमश्रुतपूर्वस्ते व्याहारविलासः ।

गोपीनाथाचार्यः—स खलु भवतामेव वेद्यः । (इत्युपसृत्य प्रणमति ।)

(नेपथ्ये ।)

स्वामिन्, नायं पन्थाः श्रीजगन्नाथालयोपसर्पणाय ।

भगवान्—(आकर्ण्य ।) ज्ञायतामाचार्य, किमेतत् ।

गोपीनाथाचार्यः—(नेपथ्याभिमुखमवलोक्य ।) ज्ञातं ज्ञातम् । अयमयं भट्टाचार्यः श्रीजगन्नाथमदृष्ट्वैव भगवच्चरणोपसर्पणार्थमागच्छति ।

---

१. निदर्शनालंकारः.

**दामोदरः**—पुरैव ज्ञातमस्ति ।

(इति सर्वे तन्मुखमीक्षमाणास्तिष्ठन्ति ।)

(ततः प्रविशति विस्मयोत्फुल्लमनाः सार्वभौमः ।)

**सार्वभौमः**—(स्वगतम् ।) अहो, अवितथमेवाह गोपीनाथाचार्यः । अस्माकमपि चेतो यदीदृशमजनि तदयमीश्वर एव । (इति सोत्कण्ठं परिक्रम्य ।) अहो, इदमस्मन्मातृष्वसुः पुरम् । तद्यावत्प्रविशामि । (इति प्रवेशं नाटयति ।)

(आचार्य उत्थायाभिगच्छति ।)

**सार्वभौमः**—(अग्रेऽवलोक्य ।) आचार्य, किं कुर्वन्ति स्वामिनः ।

**आचार्यः**—इतइत आगच्छन्तु भवन्तः ।

**सार्वभौमः**—(उपसृत्य भगवन्तं दण्डवत्प्रणम्याञ्जलिं बद्ध्वा ।)

नानालीलारसवशतया कुर्वतो लोकलीलां
साक्षात्कारेऽपि च भगवतो नैव तत्तत्त्वबोधः ।
ज्ञातुं शक्नोत्यहह न पुमान्दर्शनात्स्पर्शरत्नं
यावत्स्पर्शाज्जनयतितरां लोहमात्रं न हेम[1] ॥ ३२ ॥

अपि च ।

स्वजनहृदयसद्मा नाथ पद्माधिनाथो
भुवि चरसि यतीन्द्रच्छद्मना पद्मनाभः ।
कथमिह पशुकल्पास्त्वामनल्पानुभावं
प्रकटमनुभवामो हन्त वामो [2]विधिर्नः ॥ ३३ ॥

**भगवान्**—(कर्णौ पिधाय ।) भट्टाचार्य, भवद्वात्सल्यपात्रमेवास्मि । तत्किमिदमुच्यते । (स्वगतम् ।) अहो, इदानीमस्याशयः परीक्षणीयः ।(प्रकाशम् ।) हंहो महाशय, निरुच्यतां कस्तावच्छास्त्रार्थः ।

**भट्टाचार्यः**—(अञ्जलिं बद्ध्वा ।) भगवन्,

शास्त्रं नानामतमपि तथा कल्पितं स्वस्वरुच्या
नो चेत्तेषां कथमिव मिथः खण्डने पण्डितत्वम् ।

---

१. दृष्टान्तालंकारः. २. काव्यलिङ्गमलंकारः.

तत्रोद्देश्यं किमपि परमं भक्तियोगो मुरारे-
निष्कामो यः स हि भगवतोऽनुग्रहेणैव लभ्यः ॥ ३४ ॥

अपि च ।

वेदाः पुराणानि च भारतं च तन्त्राणि मन्त्रा अपि सर्व एव ।
ब्रह्मैव वस्तु प्रतिपादयन्ति तत्त्वेऽस्य विश्राम्यति सर्व एव ॥ ३५ ॥

यतः ।

यस्मिन्बृहत्त्वादथ बृंहणत्वान्मुख्यार्थवत्त्वे सविशेषतायाम् ।
ये निर्विशेषत्वमुदीरयन्ति ते नैव तत्साधयितुं समर्थाः ॥ ३६ ॥

तथा हि । हयशीर्षपञ्चरात्रम्—

या या श्रुतिर्जल्पति निर्विशेषं सा साभिधत्ते सविशेषमेव ।
विचारयोगे सति हन्त तासां प्रायो बलीयः सविशेषमेव ॥ ३७ ॥

तथा हि । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देनैव जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्ति ।' इत्यादिकया श्रुत्या अपादानकरणकर्मादिकारकत्वेन विशेषवत्त्वापत्तेः । एवं 'यतो वा इमानि भूतानि जायन्ते' इत्यादिकया 'स ऐक्षत' इत्यादौ 'सोऽकामयत' इत्यादौ-च 'ईक्षणं पर्यालोचनम्' 'कामः संकल्पः' इत्याभ्यामपि विशेषवत्त्वान्न तावन्निर्विशेषत्वमुपपन्नं भवति । आयाते च विशेषे रूपस्यापि विशेषादायातत्वम् । न तु तद्रूपं प्राकृतं ज्योतिश्चरणाभिधानादिति । ज्योतिषोऽप्राकृतत्वं यथा साध्यते तथा तस्य रूपस्यापीति । केवलनिर्विशेषत्वे शून्यवादावसरः प्रसज्येत । तेन ब्रह्मशब्दो मुख्य एव मुख्यत्वेन भगवान्ब्रह्मेत्यवशिष्टम् । तथा च 'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते' स्वपक्षरक्षणग्रहग्रहिलास्तु मुख्यार्थाभावाभावेऽपि लक्षणया निरूपयितुमशक्यमपि निर्विशेषत्वं ये प्रतिपादयन्ति तेषां दुराग्रहमात्रम् । वस्तुतस्तु ।

आनन्दो द्विविधः प्रोक्तो मूर्तामूर्तप्रभेदतः ।
अमूर्तस्याश्रयो मूर्तो मूर्तानन्दोऽच्युतो मतः ॥ ३८ ॥
अमूर्तः परमात्मा च ज्ञानरूपश्च निर्गुणः ।
स्वस्वरूपश्च कूटस्थो ब्रह्म चेति सतां मतम् ॥ ३९ ॥

अमूर्तमूर्तयोर्भेदो नास्ति तत्त्वविचारतः।
भेदस्तु कल्पितो वेदैर्मणितत्तेजसोरिव ॥ ४० ॥'

इति हयशीर्षपञ्चरात्रम्। तथा कपिलपञ्चरात्रेऽपि अगस्त्यं प्रति कपिलवाक्यम्—

'द्वे ब्रह्मणी तु विज्ञेये मूर्तं चामूर्तमेव च।
मूर्तामूर्तस्वभावोऽयं ध्येयो नारायणो विभुः ॥ ४१ ॥'

इति पाञ्चरात्रिकमतमेव निर्मत्सरम्। केवलनिर्विशेषब्रह्मवादिनस्तु 'अमूर्तानन्दमेव ब्रह्म' इति निरूपयन्तः स्ववासनापारुष्यमेव प्रकटयन्ति। न तु ते निर्विशेषत्वं स्थापयितुं शक्नुवन्ति। पाञ्चरात्रिकमतस्वीकारे तु 'आनन्दं ब्रह्मणो रूपम्', 'एकमेवाद्वितीयं ब्रह्म' इत्यादि च सिद्ध्यति। रूपत्वेन मूर्तत्वम्, 'मणितत्तेजसोरिव' इत्युक्तेनाद्वितीयत्वम्, तेन भगवानेव ब्रह्मेति सर्वशास्त्रमतम्। वासनावैशिष्ट्यादेव मूर्तानन्दे भगवति लीलाविग्रहमिति मन्वाना अमूर्तानन्दमेव ब्रह्मेति केचिदाहुः। पाञ्चरात्रिकास्त्वविगीतशिष्टा भगवदुपासकत्वात्। तेन तदाचरितेनैव वेदार्था अनुमीयन्ते। तथा च।

शाखाः सहस्रं निगमद्रुमस्य प्रत्यक्षसिद्धो न समग्र एषः।
पुराणवाक्यैरविगीतशिष्टाचारैश्च तस्यावयवोऽनुमेयः ॥ ४२ ॥

तत्र पुराणवचनानि। यथा—

'यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्'

इत्यादि। पूर्णं रूपत्वेन, निर्विशेषं तु ब्रह्म अपूर्णम्। नीरूपमित्यर्थः। शिष्टास्तु सात्वताः। तेषां मतम्—'वासुदेवपरा देवता वासुदेवपरात्परमात्मनः संकर्षणो जीवः' इत्यादि। जीवयति जीवं करोतीति जीवः। न तु स्वयं जीवः। स चात्मा 'शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू' इति तदुक्तेः। तस्मादेव जीवसृष्टिरित्यर्थः। अतो मूर्तानन्द एव कृष्ण इति शास्त्रार्थः।

भगवान्—साधु साधु। तदिदानीं पुण्डरीकाक्षदर्शनाय साधय।

भट्टाचार्यः—यथाज्ञापयति देवः । (इति दामोदर-जगदानन्दौ गृहीत्वा निष्क्रान्तः ।)

मुकुन्दः—कथमयमेतौ गृहीत्वा गतः ।

गोपीनाथाचार्यः—अस्ति निगूढम् । किंतु देव, स एवायं भट्टाचार्यः ।

भगवान्—महाभागवतस्य भवतः सङ्गादन्यथैव जातः ।

गोपीनाथाचार्यः—(विहस्य ।) एवमेव ।

(ततः प्रविशतोऽपटीक्षेपेण दामोदर-जगदानन्दौ ।)

दामोदरजगदानन्दौ—देव, भट्टाचार्येण पद्यद्वयं भैक्ष्यमन्नं च भगवज्जगन्नाथभुक्तावशिष्टं प्रहितमस्ति ।

भगवान्—अनुगृहीतोऽस्मि ।

मुकुन्दः—पद्यद्वयं पश्यामि । (इति तत्करात्पत्रिकामादाय स्वगतं वाचयति ।)

वैराग्यविद्यानिजभक्तियोगशिक्षार्थमेकः पुरुषः पुराणः ।
श्रीकृष्णचैतन्यशरीरधारी कृपाम्बुधिर्यस्तमहं प्रपद्ये ॥ ४३ ॥
कालान्नष्टं भक्तियोगं निजं यः प्रादुष्कर्तुं कृष्णचैतन्यनामा ।
आविर्भूतस्तस्य पादारविन्दे गाढं गाढं लीयतां चित्तभृङ्गः ॥ ४४ ॥

(इति वाचयित्वा भित्तौ विलिख्य देवहस्ते ददाति ।)

(भगवानालोक्य विदारयति ।)

गोपीनाथाचार्यः—देव, मध्याह्नो जातः । तदुत्तरकरणीयाय सज्जीभवन्तु श्रीचरणाः ।

सर्वे—एवमेव । (इति निष्क्रान्ताः ।)

इति सार्वभौमानुग्रहो नाम षष्ठोऽङ्कः ।

---

सप्तमोऽङ्कः ।

(ततः प्रविशति सार्वभौमः ।)

सार्वभौमः—अहो, कथमद्यासमय एव गजपतिना समाहूतोऽस्मि । तदुचितमुपसर्पितुम् । (इत्युपसर्पति ।)

(ततः प्रविशति राजा, अमितश्च परीवारः ।)

**राजा**—कः कोऽत्र भोः । समाहूयतां भट्टाचार्यः ।

(उपसृत्य ।)

**भट्टाचार्यः**—एषोऽहमनाह्वानेनैवागतः ।

**राजा**—(प्रणम्य ।) इदमासनम् । आस्यताम् ।

(भट्टाचार्य आशिषं प्रयुज्यासनमध्यास्ते ।)

**राजा**—भट्टाचार्य, श्रुतं मया कोऽपि महाप्रभावः परमकारुणिको यतीन्द्रः संप्रति गौडादागतोऽस्ति ।

**भट्टाचार्यः**—अथ किम् ।

**राजा**—कथं मया तस्य चरणवन्दनं क्रियते ।

**भट्टाचार्यः**—इदं त्वतिदुर्घटम् । विरलप्रचाराणां तेषां निष्किंचनेनैव दर्शनं लभ्यते । तत्रापि दिनकतिपयान्यद्य दक्षिणस्यां दिशि चलिताः सन्ति ।

**राजा**—किमिति जगन्नाथमहाप्रभोः समीपं विहाय चलितवन्तः ।

**भट्टाचार्यः**—'तीर्थीकुर्वन्ति तीर्थानि स्वान्तस्थेन गदाभृता' इति सामान्यानामेव महतामयं निसर्गः । अयं तु भगवानेव स्वयम् ।

**राजा**—(सविस्मयम् ।) भट्टाचार्य, भवन्तश्चेदिदं ब्रुवन्ति तत्सत्यमेवैतत् । तदा किमिति यत्नपुरःसरं भवतात्र नारक्षि ।

**भट्टाचार्यः**—महाराज,

ब्रह्मादयो लोकपाला यद्भ्रूभङ्गतरङ्गिणः ।
विना स्वकरुणादेवीं पारतन्त्र्यं न सोऽर्हति ॥ १ ॥

तथापि ।

कति न विहितं स्तोत्रं काकुः कतीह न कल्पिता
कति न रचितं प्राणत्यागादिकं भयदर्शनम् ।
कति न रुदितं धृत्वा पादौ तथापि स जग्मिवा-
न्प्रकृतिमहतां तुल्यौ स्यातामनुग्रहनिग्रहौ ॥ २ ॥

**राजा**—(सोत्कण्ठम् ।) पुनरत्रागमिष्यन्ति ।

भट्टाचार्यः—अथ किम् । सङ्गिनस्त्वत्र वर्तन्ते ।

राजा—कथमेकाकी चलितः ।

भट्टाचार्यः—तादृशः कथमेकाकी । तथापि मया समीचीना विप्राः सङ्गे नियुक्ताः सन्ति ।

राजा—कियद्दूरं तावत् ।

भट्टाचार्यः—गोदावरीं यावत्ते यास्यन्ति । भगवांस्तु सेतुबन्धपर्यन्तं गमिष्यतीत्यनुमीयते ।

राजा—ब्राह्मणास्तावद्दूरं किमु न प्रेषिताः ।

भट्टाचार्यः—तस्याननुमतेः । गोदावरीपर्यन्तं तु रामानन्दानुरोधात्तेषां सङ्गोऽङ्गीकृतः ।

राजा—कस्तावत्तस्यानुरोधः ।

भट्टाचार्यः—गन्तव्यमिति निश्चये कृते मयोक्तं गोदावरीतीरे रामानन्दो वर्तते, सोऽवश्यमेवानुग्राह्यः ।

राजा—कथं तस्येदं सौभाग्यम् ।

भट्टाचार्यः—महाराज, स खलु सहजवैष्णवो भवति । पूर्वमयमस्माकमुपहासपात्रमासीत् । संप्रति भगवदनुग्रहे जाते तन्महिमज्ञता नो जाता ।

राजा—श्रुतोऽस्ति मया त्वयि यादृशस्तस्यानुग्रहो जातः ।

भट्टाचार्यः—भगवत्प्रभावो हि स्वतः प्रकाशी ।

(प्रविश्य ।)

दौवारिकः—भट्टाचार्य, भवत्प्रेषिता विप्रा गोदावरीतो निवर्तिता भवन्तं प्रतीक्षन्ते ।

भट्टाचार्यः—उत्कण्ठते राजा । प्रवेश्यन्तामिहैव ।

दौवारिकः—यथाज्ञापयसि । (इति पुनस्तानादाय प्रविशति ।)

भट्टाचार्यः—अहो, आगच्छतागच्छत ।

(विप्रा उपसृत्य राजानमाशीर्भिरभ्यर्च्य सार्वभौमं प्रणमन्ति ।)

राजा—उपविश्यामूलं कथयत ।

(सर्वे उपविशन्ति ।)

**भट्टाचार्यः**— एकतम एव कथयतु ।

**एकः**—इतस्तावदालाननाथदेवमवलोक्य स्तुत्वा महामत्तकरीन्द्रवदनङ्कुशकुशलगतिकुशलस्त्वरया रयातिशयैरप्यस्माभिरनुगन्तुं दुःशकः शकलमिव सुमेरोरौदीच्येन प्रबलतरमरुता विभज्य चलितं निरवधि भगवन्नामसंकीर्तनविकस्वरस्वरपरभागाधरीकृतधाराधरधोरणिधीरध्वनिरध्वनि बतैकमनोऽभिवीक्ष्यमाणो जनैर्लघीयसा कालेनैव कूर्मक्षेत्रमुत्तीर्णवान् ।

**सार्वभौमः**—एतदभ्यन्तरे भिक्षा नाभूत् ।

**विप्रः**—नाभूदेव ।

**भट्टाचार्यः**—भवद्भिः किंकृतम् ।

**विप्रः**—अस्माभिस्तु यथालाभं किंचिदशित्वा दृश्यमान एवायमनुगम्यते । ततस्तत्रैव कूर्मक्षेत्रे कूर्मदेवं प्रणम्य स्तुत्वा कूर्मनाम्नो द्विजवरस्य गृहमुत्तीर्णवान् । समनन्तरं तेनैव निमन्त्रितः कृतभिक्षश्च यदन्यत्कृतवान् तदप्यद्भुतम् ।

**भट्टाचार्यः**—किं तत् ।

**विप्रः**—तत्रैव कश्चिद्वासुदेवनामा विप्रो गलत्कुष्ठः कुष्ठकृमिनिकरकरम्बितबहुलरुधिरवसापूयक्लिन्नसर्वाङ्गः कदाचित्पतनीपत्यमानान्कृमीनुत्थाप्य तत्रैव निवेशयन्ननुद्विग्नो भगवन्मग्नमना इव केनाप्यकथितोऽपि स्वयमेव भगवताप्रापि । अनन्तरमविलम्बेनैव चिरकाललब्धपरमसुहृदिव गाढतरमायताभ्यां भुजाभ्यामयं तथाविध एव पर्यरम्भि समनन्तरं तेन विग्रहेण ।

काहं दरिद्रः पापीयान्क्व कृष्णः श्रीनिकेतनः ।
ब्रह्मबन्धुरिति स्माहं बाहुभ्यां परिरम्भितः ॥ ३ ॥

इति पठन्नेव सद्योऽतिद्योतिप्रकृतसुन्दराङ्गः समजनि । तदनु पुनस्तेनोक्तम् । भगवन्, कथमयमीदृशो मे निग्रहः कृतः । तथाविधेन मया आमयाविना विना दुःखं निरुद्वेगेन स्थितं संप्रति संप्रतिपद्यमानमानतया सर्वा एव मनोवृत्तय उत्तिष्ठेयुः । भगवतोक्तम् । ब्रह्मन्, नपुनस्ते भगवदनुस्मरणमन्तरेण मनसो बाह्यव्यापारा भविष्यन्ति । तदलमुद्वेगेनेति ।

राजा—भट्टाचार्य, सत्यमेवायमीश्वरः । अन्यथा ईदृक्करुणा जीवस्य न घटते । कुष्ठहारित्वं तु योगीन्द्रस्यापि संगच्छते ।

सार्वभौमः—ततस्ततः ।

विप्रः—ततश्च नृसिंहक्षेत्रमुपगम्यागम्यानुभावो भगवन्तं नृसिंहं दृष्ट्वा स्तुत्वा प्रणम्य प्रदक्षिणीकृत्य प्रतस्थे ।

काञ्चनाचलमरीचिवीचिभिर्गौरयन्किमपि दक्षिणां दिशम् ।
दर्शनेन करुणातरङ्गिणा द्रावयञ्जनमनांसि सर्वतः ॥ ४ ॥

अपि च ।

कृष्ण कृष्ण जय कृष्ण कृष्ण हे कृष्ण कृष्ण जय कृष्ण कृष्ण हे ।
कृष्ण कृष्ण जय कृष्ण कृष्ण हे कृष्ण कृष्ण जय कृष्ण पाहि नः॥५॥

इत्थमम्बुदविकस्वरस्वरस्निग्धमुग्धवचनामृतद्रवैः ।
ह्लादयञ्श्रुतिमतां श्रुतिद्वयं चित्तमप्यपहरन्स जग्मिवान् ॥ ६ ॥

सार्वभौमः—सत्यमेवात्थ । तस्यैवमेव प्रकृतिः ।

विप्रः—ततो गोदावरीतीरमासाद्य विहितविश्रामे जगज्जनमनोभिरामे निरुपमकृपाभिरामे प्रेमसौभगवति भगवति कनककेतकोपवन इव परिमलामोदितदिग्वलये सकलगुणनिलये स्वयंप्रकाशिकया तत्प्रथया कोऽयं कोऽयमिति कृतसमूहः समूहः क्षौणिसुराणां तत्र मिलितवान् । निमन्त्रितश्च केनापि । समनन्तरमनन्तरहस्ये सर्वतः संचरति जनचयश्रवणकान्ते तदुदन्ते मन्त्राकृष्ट इव ग्रहगृहीत इव विस्मयचमत्कारविकारविसंष्ठुल इव रामानन्दरायः समुपेयिवान् ।

राजा—रामानन्द, धन्योऽसि धन्योऽसि । यस्य ते नयनविषयीभूतास्ते श्रीचरणाः ।

विप्रः—समनन्तरमागत्यैव चरणकमलपरिसरे सरेरीयमाणाश्रु निपतति स्म स्वयमेव । अये, त्वमेव रामानन्दोऽसीति भगवता सानुग्रहमुक्ते अथ किमिति च प्रत्यूचे । तदनु भगवतापि सार्वभौमानुरोधेन भवदालोकनमभीष्टं ममेति मयात्र क्षणमवस्थितम् । तत्सुविहितमेव विहितं भवता यत्स्वयमेव समुपसेदे तदुच्यतां किंचिदित्यभाणि । ततो यद्यपि रामानन्दो

हि कोऽयं किंनामा किंमहिमा किमाशयः किं तत्त्व इति किमपि भगवद्विषयकज्ञानविशेषानभिज्ञस्तथापि चिरकालकलितसततसख्यसुखसुभगंभावुक इव निःसाध्वस एव किमपि पठितुमुपचक्रमे ।

मनो यदि न निर्जितं किममुना तपस्यादिना
कथं स मनसो जयो यदि न चिन्त्यते माधवः ।
किमस्य च विचिन्तनं यदि न हन्त चेतोद्रवः
स वा कथमहो भवेद्यदि न वासनाक्षालनम् ॥ ७ ॥

**भगवान्**—बाह्यमेतत् ।

का विद्या—

**रामानन्दः**—

—हरिभक्तिरेव न पुनर्वेदादिनिष्णातता

**भगवान्**—

कीर्तिः का—

**रामानन्दः**—

—भगवत्परोऽयमिति या ख्यातिर्न दानादिजा ।

**भगवान्**—

का श्रीः—

**रामानन्दः**—

—तत्प्रियता न वा धनजनग्रामादिभूयिष्ठता

**भगवान्**—

किं दुःखं—

**रामानन्दः**—

—भगवत्प्रियस्य विरहो नो हृद्व्रणादिव्यथा ॥ ८ ॥

**भगवान्**—भद्रम् । के मुक्ताः ।

**रामानन्दः**—

प्रत्यासत्तिर्हरिचरणयोः सानुरागे न रागे
प्रीतिः प्रेमातिशयिनि हरेर्भक्तियोगे न योगे ।

आस्था तस्य प्रणयरभसस्योपदेहे न देहे
येषां ते हि प्रकृतिसरसा हन्त मुक्ता न मुक्ताः ॥ ९ ॥

भगवान्—भवतु ।
किं गेयं-

रामानन्दः—
-व्रजकेलिकर्म-

भगवान्—
-किमिह श्रेयः-

रामानन्दः—
-सतां संगतिः

भगवान्—
किं स्मर्तव्यं-

रामानन्दः—
-अघारिनाम-

भगवान्—
-किमनुध्येयं-

रामानन्दः—
-मुरारेः पदम् ।

भगवान्—
क स्थेयं-

रामानन्दः—
-व्रज एव-

भगवान्—
-किं श्रवणयोरानन्दि-

रामानन्दः—
-वृन्दावन-
क्रीडैका-

१. एकावल्यलंकारः.

**भगवान्**—

–किमुपास्यमत्र–

**रामानन्दः**—

–महसी श्रीकृष्णराधाभिधे ॥ १० ॥

**भगवान्**—भद्रम् । उच्यतामुच्यताम् ।

**रामानन्दः**—(स्वगतम् ।) इतः परं किं वक्तव्यम् । प्रश्नानुरूपमुदितमेव । अधुना यद्वक्तव्यं तेनास्य सुखं भवति न वेति न जानामि ।

(इति क्षणमभिचिन्त्य प्रकाशम् ।)

निर्वाणनिम्बफलमेव रसानभिज्ञा-
श्चूष्यन्तु नाम रसतत्त्वविदो वयं तु ।
श्यामामृतं मदनमन्थरगोपरामा-
नेत्राञ्जलीचुलुकितावसितं पिबामः ॥ ११ ॥

**भगवान्**—पुनरन्यदुच्यतां समानार्थकमेतत् ।

**रामानन्दः**—इतः परं प्रतिपाद्यमेव नास्ति । किमन्यद्वक्तव्यम् ।

(इति मनसि विचार्य प्रकाशम् ।)

नीचानेव पथश्चकोरयुवतीयूथेन याः कुर्वते
सद्यः स्फाटिकयन्ति रत्नघटितां याः पादपीठावलीम् ।
याः प्रक्षालितमृष्टयोर्जललवप्रस्यन्दशङ्काकृत-
स्ताः कृष्णस्य पदाब्जयोर्नखमणिज्योत्स्नाश्चिरं पान्तु नः ॥१२॥

**भगवान्**—काव्यमेवैतत् । पुनरुच्यताम् ।

**रामानन्दः**—(क्षणं विचिन्त्य ।)

श्रीवत्सस्य च कौस्तुभस्य च रमादेव्याश्च गर्हाकरो
राधापादसरोजयावकरसो वक्षःस्थलस्थो हरेः ।
बालार्कद्युतिमण्डलीव तिमिरैश्छन्देन बन्दीकृता
कालिन्द्याः पयसीव पीवविकचं शोणोत्पलं पातु नः ॥ १३ ॥

**भगवान्**—इदमपि तथा ।

**रामानन्दः**—(चरणौ धृत्वा)।

सखि न स रमणो नाहं रमणीति भिदावयोरास्ते ।
प्रेमरसेनोभयमन इव मदनो निष्पिपेष बलात् ॥ १४ ॥

अथवा ।

अहं कान्ता कान्तस्त्वमिति न तदानीं मतिरभू-
न्मनोवृत्तिर्लुप्ता त्वमहमिति नौ धीरपि हता ।
भवान्भर्ता भार्याहमिति यदिदानीं व्यवसिति-
स्तथापि प्राणानां स्थितिरिति विचित्रं किमपरम् ॥ १५ ॥

**सार्वभौमः**—ततो भगवता किमुदितम् ।

**विप्रः**—तदा यदवलोकितं तदाकलय ।

धृतफण इव भोगी गारुडीयस्य गानं
तदुदितमतिरत्याकर्णयन्सावधानम् ।
व्यधिकरणतया वानन्दवैवश्यतो वा
प्रभुरथ करपद्मेनास्यमस्याप्यधत्त ॥ १६ ॥

**राजा**—भट्टाचार्य, कोऽयं संदर्भः ।

**भट्टाचार्यः**—महाराज, निरुपधि हि प्रेम कथंचिदप्युपधिं न सहते इति पूर्वार्धे भगवतोः कृष्णराधयोरनुपधि प्रेम श्रुत्वा तदेव पुरुषार्थीकृतं भगवता । मुखपिधानं चास्य तद्रहस्यत्वप्रकाशकम् ।

**विप्रः**—तदा चिकुरकलापं द्विधा कृत्वा तेनैव तच्चरणयुगं वेष्टयित्वा निपत्य गदितम् ।

महारसिकशेखरः सरसनाट्यलीलागुरुः
स एव हृदयेश्वरस्त्वमसि मे किमु त्वां स्तुमः ।
तवैतदपि साहजं विविधभूमिकास्वीकृति-
र्न ते नयति भूमिका भवति नोऽतिविस्मापनी ॥ १७ ॥

(इति चिरं चरणकमलं धृत्वा रुदन्नासीत् । मध्ये मध्ये किंचिद्वदति च ।)

आकस्मिको नु विधिना निधिरभ्यनायि
भग्नः किमिन्दुरमृतस्य यदेष पातः ।

आनन्दभूरुहफलं सुविपच्चरीणं
दृष्टं यदेव तव देव पदारविन्दम् ॥ १८ ॥

भगवन्, यथैवाद्य मया स्वप्ने दृष्टं तथैव साक्षादपि। (इति पुनरपि पादौ धृत्वा रोदिति। भगवान्गाढं परिष्वजते।) अतः परं निमन्त्रयित्वा। विप्रवरेण समागत्य 'देव, अपराह्णो जातः' इत्युक्तो भगवान्माध्यंदिनकर्मणे चलितवान्। वयमपि तच्चरणारविन्दं प्रणम्य तदहरेव प्रत्याजिगमिषवः स्मः।

**सार्वभौमः**—तदधुना विश्राम्यतां भवद्भिः।

**विप्रः**—यथाज्ञापयति भवान्।

(राजा पारितोषिकं ददाति।)

(विप्राः सादरमादाय निष्क्रान्ताः।)

(ततः प्रविशति दौवारिकः।)

**दौवारिकः**—देव, कर्णाटपतिना महाराजेन प्रेषितमुपायनमादाय तदमात्यो मल्लभट्टनामा पण्डितराजो द्वारमध्यास्ते।

**सार्वभौमः**—ज्ञायतेऽसौ महापण्डितो भवति।

**राजा**—प्रवेश्यताम्।

**दौवारिकः**—यथाज्ञापयति देवः। (इति निष्क्रम्य तमादाय प्रविशति।)

**सार्वभौमः**—आगच्छन्तु भट्टाः। (इत्युत्थानं नाटयति।)

**मल्लभट्टः**—(राजानमाशीर्भिरभ्यर्च्य।) भट्टाचार्य, किमिदं क्रियते। नाहं तवाभ्युत्थानीयः। अथवा।

सदैव तुङ्गः किल काञ्चनाचलः सदैव गम्भीरतमाः पयोधराः।
सदैव धीरा विनयैकभूषणा लक्ष्मीः प्रकृत्यैव जनैः समीयते ॥ १९ ॥

**राजा**—इदमासनम्।

**मल्लभट्टः**—यथाज्ञमुपविशामि। (इत्युपविशति।)

**राजा**—अपि कुशलं कर्णाटपतेः।

**मल्लभट्टः**—यस्य भवद्विधाः सुहृदस्तस्य सततमेव तत्। किंतु सांप्रतमधिकमपि।

**राजा**—कीदृशं तत्।

मल्लभट्टः—महाराज, एतस्माज्जनपदतः सतीर्थयात्राव्याजेन द्रुतकनकद्युतिर्यतीन्द्रः कोऽप्येको यदवधि हन्त दक्षिणाशां संप्राप्तस्तदवधि सोऽपि निर्वृतात्मा।

सार्वभौमः—(सोत्कण्ठम्।) भट्टाः, कथयन्तु कथयन्तु।

राजा—कथमिव।

मल्लभट्टः—यथोत्तरमेव दक्षिणस्यां दिशि कियन्तः कर्मनिष्ठाः कतिचिदेव ज्ञाननिष्ठा विरला एव सात्वताः प्रचुरतराः पाशुपताः प्रचुरतमाः पाषण्डिनः। तेन तेषामन्योन्यवादविसंष्ठुलानामुच्चावचनिर्वचनचातुर्यधुर्याणां स्वस्वमताचार्यवर्याणां प्रसङ्गेन प्रायशो बहुलोद्वेग एव नो महीपालः।

राजा—ततः।

मल्लभट्टः—आकस्मिकप्रवेशमात्रेणैव तस्य यतिपतेर्दिशि विदिशि सानन्दचमत्कारं समूढेष्वाबालवृद्धतरुणेषु लोकेषु दिदृक्षयोपनतेषु पण्डितमण्डलेष्वपि परमनयनसुभगया वपुर्लक्ष्म्यैव प्रकटीकृतं महिमानमनुभूय विनोपदेशेनापि 'कर्त्तैवं स्याम' इति तत्कालसमुदित्वरवासनाविशेषेण जातपुलकास्रवः सर्व एव स्वस्वमतप्रच्यावेन तत्पथप्रविष्टा बभूवुः। तस्य परम्पराश्रवणेन लब्धपरमानन्दोऽस्मन्नरलोकपालस्तद्विशेषचरितमवगन्तुं गूढवेशेन ब्राह्मणान्प्रहित्य यावत्सेतुबन्धं ततः प्रत्यागमनावधि च तस्यालौकिकचमत्कारं तत्तन्मुखादनुभवन् भवदवदहनज्वालामेव विस्मृतवान्।

राजा—अमात्य, धन्योऽसौ युष्मदीयो महीपालः।

सार्वभौमः—किं किं श्रुतम्, किंचित्कथ्यताम्।

राजा—अमात्य, कथ्यताम्।

मल्लभट्टः—एकस्मिन्नहनि निजसुखावेशेन विगलद्विलोचनजलसकलधौतकलधौतशरीरं रोमाञ्चसंचयेन मुकुलाकुलायमानकदम्बभूरुहाकारं भगवन्नामसंकीर्तनसगद्गदस्वरं स्वरंहसा स्वानन्दवैवश्येन वर्त्मपरिचयाभावतोऽपि यथावर्त्मैव चलन्तं भगवन्तमालोक्य पाषण्डिनो 'वैष्णवोऽयं भवति भिक्षुर्भगवत्प्रसादनाम्नैवेदं ग्रहीष्यति। तदेतदन्नमेनमाशयामः' इति श्वभोजनयोग्यमशुचितरान्नं स्थाल्यां निधाय पुरोगत्वा, 'स्वामिन्, भगवत्प्रसाद-

मिमं गृहाण' इति श्रावयित्वा समूचिरे चिरेण । भगवान्सर्वज्ञोऽपि भगवत्प्रसादनाम्ना तत्त्यागमसहमान एव पाणौ गृहीत्वा तत्सहितमेव पाणिमुद्यम्य चलितवान् । समनन्तरमेव महता केनापि विहगेन चञ्चुपुटे कृत्वा तदन्नं भगवत्करतलतः समादाय समुड्डीनम् ।

**सार्वभौमः**—अहो, मोहस्य महिमैषाम् ।

यन्मायया मूढधियो भ्रमन्ति भुवनेश्वराः ।
तमपीह भ्रमयितुं क्षुद्राणामयमुद्यमः ॥ २० ॥

**मल्लभट्टः**—अन्येद्युरन्यत्र कुत्रापि ब्राह्मणगृहे यदृच्छयोपगतस्तं ब्राह्मणं केवलं राम राम रामेति नाममात्रजपपरायणं दृष्ट्वा गतवान् । प्रत्यागमनसमये पुनस्तमालोकयितुं तत्रैव समुत्तीर्णस्तमेव कृष्ण कृष्ण कृष्णेत्येवं जपन्तं दृष्ट्वा पृष्टवान्—'ब्राह्मण, कथं गमनसमये राम राम रामेत्येवं जपन् भवानालोकि । अधुना कृष्ण कृष्ण कृष्णेत्येव जपन्नालोक्यते । तत्कथयास्य तत्त्वम्' इति । तदा स ऊचे—'भगवन्, तवैव प्रभावोऽयम् । यतः शैशवावधि रामनाममात्रजपपरायणोऽहं भवद्दर्शनमात्रेण कृष्ण कृष्ण कृष्णेत्येव मे वदनान्निःसरति । बलादप्यहमेतन्निवर्तयितुं न शक्नोमीति तवैवं दर्शनदोषोऽयं न मम' इति ।

**राजा**—भट्टाचार्य, कोऽत्र संदर्भः ।

**भट्टाचार्यः**—महाराज, यद्यपि समानार्थमुभयमेव ।

रमन्ते योगिनोऽनन्ते सत्यानन्दचिदात्मनि ।
इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ २१ ॥

यथा ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥ २२ ॥

इति परब्रह्मार्थत्वं समानमेव, तथापि रतिमतां राम इत्युक्ते रघुनाथस्फूर्तिः । कृष्ण इत्युक्ते व्रजराजकुमारस्फूर्तिरिति । श्रीकृष्णचैतन्यदेवस्य कृष्णात्मकत्वात्तद्दर्शने कृष्णस्फूर्तिरेव स्फुरतीति रहस्यम् ।

अपिच ।

सहस्रनामभिस्तुल्यं रामनाम वरानने ।
सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम् ॥ २३ ॥
एकावृत्त्या तु कृष्णस्य नामैकं तत्प्रयच्छति ।

इति रामनामतः कृष्णनाम श्रेयः ।

**मल्लभट्टः**—सत्यमेतत् । अस्माभिरपि भूपालस्य सदसीदमेव निरणायि । एवं । दक्षिणस्यां दिशि ये ये विष्णुभक्तास्ते किल रघुनाथभक्तिद्वारैव वनवासे पञ्चवट्यादिषु रघुनाथचरितचारुस्थलदर्शनात्तत्रैवानुरक्तिस्तेषां स्वाभाविकी । संप्रति यतीन्द्रमेनमालोक्य कृष्णपक्षपाता एव बभूवुः । एवं क्वचन स्थले कमपि ब्राह्मणमतिमूर्खतया शब्दार्थविबोधविरहेण शुद्धिवर्जितं भगवद्गीतां पठन्तं प्रायशः सर्वैरेव विहस्यमानमथ च यावत्पाठं तावदेव पुलकाश्रुविवशं विलोक्य, अहो अयमुत्तमोऽधिकारीति भगवांस्तमवादीत्—'ब्रह्मन्, यत्पठ्यते तस्य कोऽर्थः' इति । स प्रत्यूचे—'स्वामिन्, नाहमर्थं किमपि वेद्मि, अपि तु पार्थरथस्थं तोत्रपाणिं तमालश्यामं श्रीकृष्णं यावत्पठामि तावदेव विलोकयामि' इति । तदा भगवतोक्तम्—'उत्तमोऽधिकारी भवान्गीतापाठस्य' इति तमालिलिङ्ग । तदनु स खलु गीतापाठजादानन्दादपि प्रचुरतरमानन्दमासाद्य, 'स्वामिन्, स एव त्वम्' इति भूमौ निपत्य प्रणमन्नतिशयविह्वलो बभूव ।

**सार्वभौमः**—उचितमेवास्य तथा ज्ञानम् । निरन्तरभगवत्स्फूर्तिनिर्मलहृदयत्वेन यथार्थस्फूर्तिरेव भवति ।

**मल्लभट्टः**—एवमेवास्मत्सदसि विचारितमस्ति । एवमनन्तैव विचित्रा कथा तैस्तैर्गूढपुरुषैः कथिता कति कथनीया भवति ।

**सार्वभौमः**—एवमेतत् ।

**राजा**—(सोत्कण्ठम् ।) हन्त, कदा भगवान्वीक्षितव्यः ।

(नेपथ्ये । हन्त । वीक्षणसमयोऽयम्, तदलं विलम्बेन ।)

**राजा**—(सहर्षम्) भट्टाचार्य, यथायं यथाप्रस्तावमेव जगन्नाथदर्शनसमयं प्रस्तौति तथा मन्ये । श्रीकृष्णचैतन्योऽप्यागतप्रायः ।

**भट्टाचार्यः**—भट्टारक, एवमेव।

**राजा**—भट्टाचार्य, अयं पुरुषोत्तमः पुरुषोत्तमक्षेत्रस्य बीजभूतं किमपि भविष्यति। अस्मात्किल बहव एवानन्दाङ्कुरा जायेरन्। नीलाचलचन्द्रस्य सेवासौभाग्यविशेषोऽपि भविष्यति।

**सार्वभौमः**—सत्यमेतत्। पुण्यात्मनो हि नरदेवा देवांशभूता एव। तेन भवतां मनसि यदुन्मीलति तदेव सत्यम्। (नेपथ्ये।) हन्त भोः। सत्यं सत्यम्।

**राजा**—(सहर्षम्।) अद्यापि तथैव वाक्शकुनम्। तत्पश्य ज्ञायतां कोऽयम्। भट्टाचार्य, तैर्थिकस्तैर्थिकान्तरेण सह जगन्नाथदर्शनोत्कण्ठां प्रपञ्चयति।

(प्रविश्य)

**दौवारिकः**—देव, अतिसत्वरं धावमानाः कतिचित्पुरुषाः समायान्ति।

**राजा**—ज्ञायतां निरस्त्राः सास्त्रा वा तेऽमी।

**दौवारिकः**—(निष्क्रम्य पुनः प्रविश्य च) देव, निरस्त्रा एव सर्वे।

**सार्वभौमः**—नूनं प्रत्यावर्तते स एव देवः।

(पुनर्नेपथ्ये संभूय 'हरिं वन्दे हरिं वन्दे' इति कोलाहलः।)

**सार्वभौमः**—अवितथमेव भगवान्प्रत्यावृत्तः।

(नेपथ्ये।)

तीर्थेष्वमीषु सकलेषु तथा न तृप्ति-
र्जातास्य सत्वरमतः पुरुषोत्तमे सः।
प्रत्याययौ कलय जङ्गमरत्नसानू
रत्नाकरस्य सविधेः सुमुखो विधिर्नः॥ २४॥

**सार्वभौमः**—महाराज, यदयं गोपीनाथाचार्यः सहर्षमालपति तदयमागत एव भगवान्। तदहमुपसर्पामि।

**राजा**—त्वरतां त्वरताम्। मल्लभट्ट, त्वमप्यधुना विश्रामं कुरु। वयमपि कार्यविशेषाय गच्छाम।

(इति निष्क्रान्ताः सर्वे।)

इति तीर्थाटनो नाम सप्तमोऽङ्कः।

अष्टमोऽङ्कः ।

(ततः प्रविशति सार्वभौमादिमिदामोदरजगदानन्दादिभिश्चानुगम्यमानः श्रीकृष्णचैतन्यः।)

**श्रीकृष्णचैतन्यः**—सार्वभौम, एतावद्दूरं पर्यटितं, भवत्सदृशः कोऽपि न दृष्टः, केवलमेव रामानन्दरायः। स त्वलौकिक एव भवति।

**सार्वभौमः**—देव, अत एव निवेदितं सोऽवश्यमेव द्रष्टव्य इति।

**श्रीकृष्णचैतन्यः**—कियन्त एव वैष्णवा दृष्टास्तेऽपि नारायणोपासका एव। अपरे तत्त्ववादिनस्ते तथाविधा एव। निरवद्यं न भवति तेषां मतम्। अपरे तु शैवा एव बहवः। पाषण्डास्तु महाप्रबला भूयांस एव। किंतु भट्टाचार्य, रामानन्दमतमेव मे रुचितम्।

**सार्वभौमः**—भवन्मत एव प्रविष्टोऽसौ न तस्य मतकर्तृता। स्वामिन्, अतः परमस्माकमप्येतदेव मतं बहुमतं सर्वशास्त्रप्रतिपाद्यं चैतदिति।

**गोपीनाथाचार्यः**—भट्टाचार्य, भगवतोऽवस्थानस्थानं चिन्तितमस्ति।

**भट्टाचार्यः**—आचार्य, राज्ञैव चिन्तितम्।

**गोपीनाथाचार्यः**—(जनान्तिकम्।) कीदृशं तत्।

**भट्टाचार्यः**—काशीमिश्रस्यालयः।

**गोपीनाथाचार्यः**—साधु साधु, सिंहद्वारनिकटवर्ती भवति। यतः सकाशात्सुखेनैव जगन्नाथदर्शनं भविष्यति। (इति समुद्रकूलात्पुरुषोत्तमग्रामं विशन्ति।)

(ततः प्रविशन्ति भगवज्जगन्नाथप्रसादमालापाणयो जगन्नाथदेवपशुपालकाः काशीमिश्रः परीक्षामहापात्रं च।)

**सार्वभौमः**—अयमयं श्रीकृष्णचैतन्यः स्वामी। (इति सोत्कण्ठमुपसर्पन्ति।)

**सार्वभौमः**—भगवन्, एते भगवतः पशुपालाः। एष काशीमिश्रनामा। एष सर्वाधिकारी प्राड्विवाको भगवतः।

(काशीमिश्रपरीक्षामहापात्रे उपसृत्य दण्डवन्निपततः।)

**पशुपालकाः**—(मालां कण्ठे दत्त्वा प्रणमन्ति।)

**भगवान्**—अहो किमेतत्, भगवत्पार्षदा भवन्तो मदाराध्या एव कथमयोग्यमेतत्क्रियते। (इति सर्वान्प्रणम्यालिङ्गति।)

**पशुपालाः**—सार्वभौम, भगवतो दिवास्वप्नसमयः संप्रति जातः । किमिदानीं तत्रैव गत्वा स्वामिना स्थातव्यं किं वा विश्रम्य स्नानादि कृत्वा समागन्तव्यम् ।

**सार्वभौमः**—स्नात्वा देवदर्शनं कर्तव्यम् ।

**काशीमिश्रः**—तदित एवागच्छन्तु । (इति स्वालयमुपसारयति ।)

**सार्वभौमः**—भगवन्, इदं खल्वस्यैव मिश्रस्य पुरं श्रीचरणानां कृते शोधयित्वा स्थापितमस्ति । तदत्रैव प्रविशन्तु भगवन्तः ।

(इति प्रवेशं नाटयन्ति । पशुपालादयः प्रणम्य निष्क्रान्ताः ।)

(ततः प्रविशन्ति बहव एवोत्कलवासिनो महाशयाः केचित् ।)

तदानीमस्माकं समजनि न तादृक्सुभगता
गतास्तेनास्माकं परमकरुणा नेक्षणपथम् ।
इदानीं नो भाग्यं समघटत यज्जङ्गममिमं
स्वयं नीलाद्रीशं बत नयनपातैर्विचिनुमः ॥ १ ॥

(इत्युपसर्पन्ति ।)

**सार्वभौमः**—भगवन्, अयं भगवतोऽनवसरकालाङ्गसेवकोऽन्तरङ्गो जनार्दननामा । अयं स्वर्णवेत्रधारी पार्षदः कृष्णदासनामा । अयं लेखनाधिकारी शिखिमाहाती भ्रातरौ चाप्येतौ । अयं दासमहासोआरनामा महानसाधिकारी । एते निसर्गभक्ताः श्रीजगन्नाथस्य । इमे चन्दनेश्वरमरारिसिंहेश्वरा ब्राह्मणोत्तमा राजमहापात्राणि स्वभाववैष्णवाः । अयं प्रहरराजमहापात्रं परमो भगवद्भक्तः । अयं प्रद्युम्नमिश्रः । अयं विष्णुदासः । इमे रामानन्दरायसहोदराः । तन्मध्येऽयं वाणीनाथपट्टनायकः । अयं तस्य जनको भवानन्दरायः । इमे चान्ये गौडोत्कलवासिनः सर्वे त्वच्चित्तास्त्वद्गतप्राणा दण्डवत्प्रणमन्ति । एतानात्मीयत्वेनानुग्रहीतुमर्हति ।

**भगवान्**—आत्मान एवामी, कथमेषामात्मीयत्वं विशेषतो जगन्नाथसेवकाः ।

**सार्वभौमः**—भगवन्, जगन्नाथस्य भवतश्च कृष्णचैतन्यत्वमविशिष्टमेव, तथाप्यस्ति कश्चिद्भेदः । असौ दारुब्रह्म, भवान् नरब्रह्म ।

**भगवान्**—(कर्णौ पिधाय ।)

अत्युक्तिरेषा तव सार्वभौम तनोति कामं श्रवसोः कटुत्वम् ।
तीक्ष्णो हि गौडस्य रसस्य पाकस्तिक्तत्वमायाति न चैति बद्धम् ॥ २ ॥

**सार्वभौमः**—भगवन्, गौडदेशस्य रसस्य पाकः सुरस एव यत्राविरासीद्भगवान् ।

**श्रीकृष्णचैतन्यः**—विरम विरम । अतःपरं श्रीपुण्डरीकाक्षदर्शनस्य समयो जातः ।

**सार्वभौमः**—एवमेव । तदुपसर्पन्तु भगवन्तः ।

(इति भगवन्तमग्रे कृत्वा परिक्रामन्ति ।)

(नेपथ्ये ।)

अयमेष दृशो रसायनं परमानन्दपुरीश्वरः पुरस्तात् ।
दमनार्थमघौघकारिणां धृतदण्डः समये समुज्जिहीते ॥ ३ ॥

**सार्वभौमः**—(आकर्ण्य ।) अहो, अवसरः संवृत्त एव देवस्य यदयं प्रस्तौति ।

**श्रीकृष्णचैतन्यः**—(स्वगतम् ) अहो, परमानन्दपुरीश्वरस्तावन्मुनीन्द्रमाधवपुरीश्वरस्य शिष्यः । यत्र खल्वग्रजस्य विश्वरूपस्य समग्रमैश्वरं तेजः प्रविष्टं स एव वा समागतः । भवतु, देवं विलोक्य तत्त्वमस्य ज्ञेयम् ।

**सार्वभौमः**—इयं पुरो भगवतः परमानन्दपुरी । तदेनां प्रविशन्त ।

(इति सर्वे भगवता सह श्रीजगन्नाथदर्शनार्थं निष्क्रान्ताः ।)

(ततः प्रविशति परमानन्दपुरी ।)

**पुरी**—(सोत्कण्ठम् ।)

कदासौ द्रष्टव्यः स खलु भगवान्भक्ततनुमा-
नितिं प्रौढोत्कण्ठाविलुलितमहो मानसमिदम् ।
चिराद्द्य प्रातः स खलु फलकालो मम पुन-
र्न जाने कीदृक्षं जनयति फलं भाग्यविटपी ॥ ४ ॥

(इति परिक्रामन् ।) भगवन् श्रीजगन्नाथ, क्षम्यताम् । त्वामनालोक्य यदग्रे तमुपसर्पामि तत्तादृशीमुत्कण्ठां सर्वज्ञा जानन्त्येव (पुरोऽवलोक्य ।) अहो, इहैव भवितव्यं भगवता तेन । यतः ।

जगन्नाथद्वारादपि बहुलकोलाहलकृतां
समूहो लोकानामिह सरति नैवापसरति ।
अतो मन्ये धन्ये धरणि तव पुण्येन मिलितः
स एवायं देवः कनकरुचिरत्रैव भविता ॥ ५ ॥

तदहमुपसर्पामि । (इत्युपसर्पति ।)

(ततः प्रविशति परिजनैः सार्धं श्रीजगन्नाथदर्शनानन्दनिस्पन्दः श्रीकृष्णचैतन्यः ।)

**श्रीकृष्णचैतन्यः**—(स्मृतिमभिनीय) अहो, परमानन्दपुरीश्वरः सांप्रतमागमिष्यतीव लक्ष्यते । यतः ।

भगवद्दर्शनसुखमनु सुखान्तरं किमपि सांप्रतं भावि ।
आसन्नशर्मशंसी प्रसादक आकस्मिको मनसः ॥ ६ ॥

(इति सोत्कण्ठं तिष्ठति ।)

**पुरी**—(अग्रतोऽवलोक्य) अहो, अयमसौ ।

जयति कलितनीलशैलचन्द्रेक्षणरसचर्वणरङ्गनिस्तरङ्गः ।
कनकमणिशिलाविलासवक्षःस्थलगलदक्षमजस्त्ररोमहर्षः ॥ ७ ॥

**श्रीकृष्णचैतन्यः**—(अग्रतोऽवलोक्य) अयमेवासौ यदिदमाकस्मिकमागमनमिहैतस्य । (इत्युत्थाय प्रणम्य) स्वामिन्, पुरीश्वरोऽसि ।

**पुरी**—(ससंभ्रमम्) भगवन्, त्वद्दर्शनार्थमेवायमहमुत्कण्ठितो वाराणसीत आगच्छन्नस्मि ।

**श्रीकृष्णचैतन्यः**—अनुगृहीतोऽस्मि ।

(उपसृत्य ।)

**जगदानन्दः**—स्वामिन्, इत इतः । (इति विश्रामयति ।)

**सार्वभौमः**—भोः स्वामिन्, नेदमतिचित्रम् ।

ये केऽपि याः काश्चन सप्रवाहा नदाश्च नद्यश्च भवन्ति भूमौ ।
कस्यापि रत्नाकरमन्तरेण कुत्रापि नास्था न च संनिवेशः ॥ ८ ॥

(नेपथ्ये ।)

अहो रसकलावतो भगवतो रसाचार्यकं
ग्रहीतुमिव मूर्ततां व्यधित भिक्षुवेषं वपुः ।

यदेतदवनीतले सकल एव दामोदर-
स्वरूपमिति भाषते तदपृथक्तया प्रेमतः ॥ ९ ॥

**सार्वभौमः**—अहो, लोकानामत्र भगवति नैसर्गिकी रतिः। यदिदं परोक्षेऽपि सर्वे भगवत्तामेवास्य गायन्ति।

**श्रीकृष्णचैतन्यः**—(श्रुतिमभिनीय।) अहो, दामोदरस्वरूपमिति नामाकर्णितं कच्चिदयमपि समागमिष्यतीव लक्ष्यते।

**सार्वभौमः**—स्वामिन्, प्रायशो भवदवतारे केचित्पूर्वं केचित्पश्चाच्च भवदीया एव सर्वेऽवतेरुः। समये सर्वैरेव मिलितैर्भवितव्यम्। अत एव सम्प्रवाहा इत्युक्तम्।

(ततः प्रविशति दामोदरस्वरूपः।)

**दामोदरस्वरूपः**—(आकाशे लक्ष्यं बद्धा।)

हेलोद्धूलितखेदया विशदया प्रोन्मीलदामोदया
शाम्यच्छास्त्रविवादया रसदया चित्तार्पितोन्मादया।
शश्वद्भक्तिविनोदया समदया माधुर्यमर्यादया
श्रीचैतन्य दयानिधे तव दया भूयादमन्दोदया ॥ १० ॥

(इत्युपसर्पति।)

**गोपीनाथाचार्यः**—(पुरोऽवलोक्य स्वगतम्।) अये, श्रुतं मया चैतन्यानन्दशिष्यः परमविरक्तो भगवद्भक्तोऽतिविद्वान्कश्चिद्दामोदरस्वरूपं नाम। यः खलु गुरुणा बहुतरमभ्यर्थितोऽपि वेदान्तमधीत्याध्यापयेति न च तच्च कृतवान्। अपि तु।

समस्तहानाय तुरीयमाश्रमं जग्राह वैराग्यवशेन केवलम्।
श्रीकृष्णपादाब्जपरागरागतस्तुच्छीचकारैनमहो वहन्नपि ॥ ११ ॥

स एवायं तद्भगवते निवेदयामि। (इत्युपसृत्य।) भगवन्, अयमयं श्रुतचरो दामोदरस्वरूपः।

**भगवान्**—क स क सः। (इति सोत्कण्ठमुपसर्पति।)

**दामोदरस्वरूपः**—(उपसृत्य पादयोः प्रणमति।)

**श्रीकृष्णचैतन्यः**—(बाहुभ्यामुत्थाप्यालिङ्गति।)

(नेपथ्ये।)

ईश्वरपुरीनिषेवणरतः स्वतः कृष्णभक्तश्च।
अयमेति विशदहृदयो विरक्तिमान्सकलविषयेषु॥ १२॥

**सार्वभौमः**—(आकर्ण्य।) अये, भगवत्पुरपरिचारकः कोऽपि समायाति। कस्तावदसौ परीक्षामहापात्रस्य प्रतिनिधिर्वा। नासौ तथा विरक्तः।

**श्रीकृष्णचैतन्यः**—अहो, पुरीश्वरस्य सकाशात्कश्चिदायातीव।

**सार्वभौमः**—(अवलोक्य।) जानीमः। (इति निरूपयति।)

(ततः प्रविशति गोविन्दनामा कश्चित्।)

**गोविन्दः**—(स्वगतम्।)

'प्रहितोऽस्मीश्वरपुर्या महाप्रभोः सविध एव याहीति।
उपसन्नं तदिदमथो न वेद्मि निजभाग्यमहिमानम्॥'

(इत्युपसृत्यप्रणम्य चाञ्जलिं बद्ध्वा।) स्वामिन्,

दृष्टं मया प्रथममस्य यदेव रूपं
तेनैव निर्वृतिरहो मम नान्यवेषम्।
पश्यामि तं त्वमुपयाहि तमित्यहं ते
संप्रेषितश्चरणसीम्नि पुरीश्वरेण॥ १३॥

**श्रीकृष्णचैतन्यः**—अस्ति तथैव मयि तेषामखण्डमेव वात्सल्यम्।

**सार्वभौमः**—त्वं तस्य परिचारकः।

**गोविन्दः**—अथ किम्।

**सार्वभौमः**—स्वामिन्, कथमसौ ब्राह्मणेतरं परिचारकत्वेनानुगृहीतवान्।

**श्रीकृष्णचैतन्यः**—भट्टाचार्य, मैवं वादीः।

हरेः स्वतन्त्रस्य कृपापि तद्वद्धत्ते न सा जातिकुलाद्यपेक्षाम्।
सुयोधनस्यान्नमपोह्य हर्षाज्जग्राह देवो विदुरान्नमेव॥ १४॥

**सार्वभौमः**—एवमेव।

**श्रीकृष्णचैतन्यः**—भवतु। यद्यपि पूज्यानां परिचारकेण स्वपरिचर्या कारयितुं न युज्यते, तथापि तदाज्ञया तथैव कर्तव्यम्। (इति तमनुगृह्णाति।) (प्रविश्य सत्वरम्।)

**मुकुन्दः**—स्वामिन्, ब्रह्मानन्दभारती भवन्तं दिदृक्षमाण आगतोऽस्ति । यथाज्ञापयसि तदिहैवानयामः ।

**श्रीकृष्णचैतन्यः**—शान्तम्, मान्याः खलु भवन्त्यमी । तन्मयैव गन्तव्यम् ।

सर्वे—

अलौकिकानामपि लौकिकत्वमलौकिकत्वप्रथनाय नूनम् ।
भुवः प्रयाणं किल विष्णुपद्या दिवं नयत्येव शरीरभाजः ॥ १५ ॥

(इति भगवन्तमग्रे कृत्वा परिक्रामन्ति । ततः प्रविशति चर्माम्बरो ब्रह्मानन्दः ।)

**ब्रह्मानन्दः**—(पुरोऽवलोक्य ।) अयमेव श्रीकृष्णचैतन्यः ।

तथा हि—

कनकपरिघदीर्घदीर्घबाहुः स्फुटतरकाञ्चनकेतकीदलाभः ।
नवदमनकमाल्यलाल्यमानद्युतिरतिचारुगतिः समुज्जिहीते ॥ १६ ॥

**श्रीकृष्णचैतन्यः**—(उपसृत्य तमवलोक्यापि चर्मचेलत्वमात्मनोऽनभिमतमिति बोधयन्नावहित्थम् ।) मुकुन्द, कासौ ।

**मुकुन्दः**—अयमयम् ।

**श्रीकृष्णचैतन्यः**—नहि स चेदभविष्यत्तदा कथं चर्मचेलत्वेन बाह्यवेषावेशवशत्वमस्याभविष्यत् ।

**ब्रह्मानन्दः**—(आकर्ण्य स्वगतम् ।) अहो, अस्मै चर्मचेलत्वं न रोचत इव । भवति हि ।

दम्भैकमात्रप्रथनाय केवलं चर्माम्बरत्वादि न वस्तुसाधनम् ।
चलद्भिरुर्वीमृजुनैव वर्त्मना सुखेन गम्यस्य समाप्यतेऽवधिः ॥ १७ ॥

किमेतेनेति चर्म जिहासति ।

**श्रीकृष्णचैतन्यः**—(दामोदरं निरीक्षते ।)

**दामोदरः**—(इङ्गितं बुद्धा सत्वरं बहिर्वासः प्रयच्छति ।)

**ब्रह्मानन्दः**—(परिदधाति ।)

**श्रीकृष्णचैतन्यः**—(उपसर्प्य प्रणमति ।)

**ब्रह्मानन्दः**—(ससाध्वसादरम् ।) स्वामिन्, लोकशिक्षार्थं यद्यपि भवता-

मिदमुचितमेव, तथापि नोऽतिभयजनकमेतत् । तदपरं नैतदनुष्ठेयम् । पश्य पश्य ।

नीलाचलस्य महिमा न हि मादृशेन
शक्यो निरूपयितुमेवमलौकिकत्वात् ।
एते चरस्थिरतया प्रतिभासमाने
द्वे ब्रह्मणी यदिह संप्रति गौरनीले ॥ १८ ॥

**श्रीकृष्णचैतन्यः**—संप्रतिशब्दस्य वर्तमानत्वादचिरागते भवत्येव गौरब्रह्मता नामैकदेशवर्तिब्रह्मशब्दत्वाच्च ।

**ब्रह्मानन्दः**—व्याप्यव्यापकभावत्वेनैव तदनुमीयते । व्याप्यत्वं च चर्मत्यागेनैव ज्ञायताम् ।

**सार्वभौमः**—सम्यगाहुः श्रीपादाः ।

**ब्रह्मानन्दः**—सार्वभौम, पश्य पश्य ।

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
इति नामान्यनेनैव सान्वयत्वं प्रपेदिरे ॥ १९ ॥

चन्दनाङ्गदित्वं स्वप्रसादचन्दनाक्तडोरेणैव भगवद्भिः श्रीजगन्नाथदेवैरेव क्रियमाणमस्ति । पश्य पश्य भगवद्रूपमात्रस्य परमानन्दप्रदत्वम्, किं पुनः स्वयं भगवतः श्रीकृष्णस्य । अहो चित्रम् ।

आनन्दानुभवैकसाधनमहो रूपं घनानन्दचि-
द्बाह्यान्तःकरणोर्मिवृत्तिविरहस्यापादकं पश्यताम् ।
हित्वानन्दथुलब्धये हृदि निराकारं तु यैश्चिन्त्यते
मन्ये तान्भ्रमयत्यहो भगवतो सा कापि दुर्वासना ॥ २० ॥

अपिच—

अमूर्तत्वं तत्त्वं यदि भगवतस्तत्कथमहो
मदासूयादीनामपि न भगवत्तत्त्वगणना ।
न मूर्तामूर्तत्वे भवति नियमः किं तु परमो
य आनन्दो यस्मादपि स च स ईशो मम मतम् ॥ २१ ॥

**सार्वभौमः**—स्वामिन्, एवमेव। 'आनन्दमयोऽभ्यासात्' इत्यत्र व्याख्यातं चैतत्। स्वयमानन्दः परानप्यानन्दयति। यथा प्रचुरधनः परेभ्योऽपि धनं ददातीति प्राचुर्यार्थे मयडिति, किंतु तत्कृपा चेद्भवति तदा निराकारभावनातोऽपि पुनः श्रीविग्रहमाधुर्य एव निपतति। उक्तं चाभियुक्तैः।

अद्वैतवीथीपथिकैरुपास्याः स्वानन्दसिंहासनलब्धदीक्षाः।
शठेन केनापि वयं हठेन दासीकृता गोपवधूविटेन ॥२२॥ इति।

**दामोदरः**—ब्रह्मानन्दं प्रति श्रीपादा मया निमन्त्रिताः स्थ। तदिदानीमनन्तकरणीयाय गच्छन्तु।

**श्रीकृष्णचैतन्यः**—स्वामिन्, एवमेव युज्यते।

**ब्रह्मानन्दः**—यदभिरुचितं भवते। (इति दामोदरादिभिः कतिभिः सह निष्क्रान्तः)।

**श्रीकृष्णचैतन्यः**—सार्वभौम, त्वमपि गन्तुमर्हसि।

**सार्वभौमः**—देव, किंचिन्निवेदनीयमस्ति।

**श्रीकृष्णचैतन्यः**—किं तत्।

**सार्वभौमः**—स्वामिन्, अभयं चेद्दीयते तदा निवेद्यते।

**श्रीकृष्णचैतन्यः**—असाध्वसमेव कथ्यताम्।

**सार्वभौमः**—भूपालः श्रीचरणावलोकनाय समुत्कण्ठते। यद्यनुमन्यसे तदा तमानयाम।

**श्रीकृष्णचैतन्यः**—(कर्णौ पिधाय।) सार्वभौम, भवतापीदमुच्यते।

निष्किंचनस्य भगवद्भजनोन्मुखस्य
　पारं परं जिगमिषोर्भवसागरस्य।
संदर्शनं विषयिणामथ योषितां च
　हा हन्त हन्त विषभक्षणतोऽप्यसाधु ॥ २३ ॥

**सार्वभौमः**—स्वामिन्, सत्यमेवैतत्। किंत्वसौ श्रीजगन्नाथसेवकः।

**श्रीकृष्णचैतन्यः**—

आकारादपि भेतव्यं स्त्रीणां विषयिणामपि।
यथाहेर्मनसः क्षोभस्तथा तस्याकृतेरपि ॥ २४ ॥

यद्येवं पुनरुच्यते तदात्र न पुनरहं द्रष्टव्यः।

**सार्वभौमः**—(तूष्णीं तिष्ठति)।

**श्रीकृष्णचैतन्यः**—भट्टाचार्य, अतिकालो बभूव।

**सार्वभौमः**—यथारुचितं स्वामिने। (इति निष्क्रान्तः।)

**श्रीकृष्णचैतन्यः**—मुकुन्द, मयि दक्षिणस्यां दिशि गते सति श्रीपादनित्यानन्देन क्व गतम्।

**मुकुन्दः**—गौडे, उक्तं चेदं भगवदागमनसमयमनुमाय पुनः सर्वैरद्वैतप्रमुखैः सह मयात्रागन्तव्यमिति।

**गोपीनाथाचार्यः**—संप्रति द्वैराज्यादिकमपि नास्ति। पन्थाश्च सुगमः। गुण्डिचायात्रा च नेदीयसी। तदागमनसामग्री सर्वैवास्ति। किं तु स्वामिनां प्रत्यागमनवार्ता तावद्दूरगामिनी चेद्भवति। अथवा कृतं संदेहेन।

ध्वान्तं विधूय किरणैरुदितस्य भानो-
श्चन्द्रस्य वा जगति के कथयन्ति वार्ताम्।
लोकोत्तरस्य किल वस्तुन एव सेयं
शैली स्वयं स्वमभितः प्रकटीकरोति॥ २५॥

तत्स्वामिन्, जगन्नाथदेवस्य सायाह्नधूपसमयो जातः। यद्यनुमन्यसे। (इत्यर्धोक्ते साध्वसं नाटयति)।

**श्रीकृष्णचैतन्यः**—आचार्य, गम्यतां धूपावलोकनाय। अहमपि पुरीश्वरस्वरूपाभ्यां सह संकथनाय गच्छामि। (इति भगवान्निष्क्रान्तः।)

**गोपीनाथाचार्यः**—अहो, निष्क्रान्त एव भगवान्। तदहमपि धूपं दृष्ट्वा पुनस्तत्रैव मिलिष्यामि। (इति कतिचित्पदान्यादधाति।)

(नेपथ्ये।)

आसन्ने रथविजयेऽखिलेश्वरस्य प्राप्तोऽयं धरणिपतिः प्रतापरुद्रः।
भूयोऽयं यतिवृषभस्य गौरमूर्तेः प्रत्यक्षीकरणकृते प्रयत्नकृत्स्यात्॥ २६॥

**गोपीनाथाचार्यः**—अहो, अयं भट्टाचार्यस्यालापः श्रूयते। तन्मही-

पालेन गजपतिना समागतमिव । भवत्यपि अभ्यर्णोऽयं रथमहोत्सवः । तदहं श्रीजगन्नाथमालोक्य यावदागच्छामि । (इति निष्क्रान्तः ।)

(ततः प्रविशति भट्टाचार्यः ।)

**भट्टाचार्यः**—आगमनसमकालमेव यदहमाहूतोऽस्मि गजपतिना तेनोन्नीतं श्रीकृष्णचैतन्यदर्शनार्थमयमुत्कण्ठते । (इति परिक्रम्यावलोक्य च ।) अहो, अयमयमवनीपतिः । यावदुपसर्पामि । (इत्युपसर्पति ।)

(ततः प्रविशत्यासनस्थो राजा महापात्राणि च ।)

**राजा**—(सोत्कण्ठमात्मगतम् ।)

अभून्न चेष्टा मम राज्यचेष्टा सुखस्य भोगश्च बभूव रोगः ।
अतः परं चेत्स न वीक्षते मां न धारयिष्ये बत जीवनं च ॥ २७ ॥

**सार्वभौमः**—अन्तः सचिन्तित इव लक्ष्यते महाराजः । यदुपनतमपि मां न गोचरीकरोति तत्स्वयमेव परिचीये । जयतु जयतु महाराजः ।

**राजा**—(अवधानं नाटयित्वा ।) कथम् । भट्टाचार्योऽसि । एहि एहि ।

(इति प्रणमति ।)

**सार्वभौमः**—(आशीर्भिरभिनन्द्योपविशति ।)

**राजा**—भट्टाचार्य, निवेदितं भवता भगवते श्रीकृष्णचैतन्याय ।

**सार्वभौमः**—अथ किम् ।

**राजा**—किमाज्ञप्तम् ।

**सार्वभौमः**—किं कथयामि ।

**राजा**—(सविषादम् ।) तदेव मया ज्ञातमस्ति यद्भवता स्वयमुपेत्य सहर्षोल्लासं न कथितम् । हा धिक् ।

अदर्शनीयानपि नीचजातीन्स वीक्षते चारु तथापि नो माम् ।
मदेकवर्जं कृपयिष्यतीति निर्णीय किं सोऽवततार देवः ॥ २८ ॥

(क्षणं विचिन्त्य ।) अये, श्रूयताम् ।

ज्ञातैव तस्य किल सत्यगिरः प्रतिज्ञा
संप्रत्यहो क्रियत एष मयापि पक्षः ।

प्राणांस्त्यजामि किमु वा किमु वा करोमि
तत्पादपङ्कजयुगं नयनाध्वनीनम् ॥ २९ ॥

(इति सबाष्पस्तिष्ठति ।)

**सार्वभौमः**—(स्वगतम् ।) अतिभूमिं गतोऽयमस्यानुरागपरभागः । किं करोमि ।

पुनर्गत्वा ब्रूयामहह तदिदं नैव घटते
स निर्बन्धस्तस्य द्रढिमगरिमद्राघिमघनः ।
सुदुर्वारोऽप्यस्य प्रथितपटिमप्रौढिमवहो
महारागः कश्चित्कमपि न विजेतुं प्रभवति ॥ ३० ॥

तदधुना युक्तिः क्रियते । (प्रकाशम् ।) महाराज, समाश्वसिहि समाश्वसिहि । अस्त्युपायः कोऽपि भवन्मनोरथतरोः फलप्रसवाय ।

**राजा**—जानासि चेदुच्यताम् ।

**सार्वभौमः**—यद्यपि भवतोऽयमनुरागदूत एव तत्सङ्गमस्य कारयिता तथाप्यस्मद्युक्तिर्वर्तनी जीवनोपायीभवितुमर्हति ।

**राजा**—उच्यतां का युक्तिः ।

**सार्वभौमः**—जनान्तिकं केवलमनुरागमेव दूतं कृत्वाऽद्वितीय एव राजवेशं विहाय केनाप्यविदित एव भगवतो जगन्नाथदेवस्य रथोत्सववासरे नृत्यविनोदश्रममपनेतुं विजनमाराममवगाहमानमानन्दास्वादविरतबहिर्वृत्तिकमकस्मादुपेत्य विलोकयन्तु भगवन्तं भवन्त इति इतोऽन्यथा न तद्घटते ।

**राजा**—(साश्वासमपवार्य ।) एवमेव, किंतु यथेदं भवन्तं विना कोऽपि न जानाति तथा विधेयम् ।

**भट्टाचार्यः**—एवमेव । (प्रविश्य दौवारिकः ।)

**दौवारिकः**—देव, राजधानीतः कश्चिदेकः सत्वरमुपसन्नोऽस्ति प्रणिधिः ।

**राजा**—प्रवेश्यताम् ।

दौवारिकः—(सत्वरं निष्क्रम्य तमादाय प्रविश्य च।) देव, अयमयम्।

राजा—प्रणिधे, कथय संभ्रमस्य कारणम्।

प्रणिधिः—देव,

परःसहस्राः सहसैव पारे चित्रोत्पलं ये मनुजाः समूढाः।
किं तैर्थिकास्ते परचक्रजाः किं श्रुत्वैव कोलाहलमागतोऽस्मि॥ ३१॥

सार्वभौमः—तैर्थिका एव। अन्यथा पुरैव वार्ताभविष्यत्। तदनुमीयते गौडीया एवैते भगवतः श्रीकृष्णचैतन्यस्य प्रियपार्षदाः। भवतु, महत्येवासौ मधुरगोष्ठी गरिष्ठानां भविष्यति भगवता सह क्वापि गोष्ठी।

(नेपथ्ये कलकलः।)

सार्वभौमः—महाराज, सत्यमेवामी नरेन्द्रसरस्तीरं समायाताः। यदयमानन्दकोलाहलः श्रूयते।

राजा—सत्यमेवैतत्।

सार्वभौमः—महाराज, यदि रोचते तदा वलभीमारुह्य पश्यन्तु कौतुकम्।

राजा—यथारुचितं भवते। (इति वलभीमारुह्य पन्थानमवलोक्य च।) सार्वभौम, क एष भगवन्निर्माल्यमालामादाय त्वरमाणस्तैर्थिकानामभिमुखं धावति।

सार्वभौमः—अयं दामोदरो भगवच्चैतन्यस्य प्रियपार्षदः। भगवता अद्वैतादिप्रियसुहृदामागमनं श्रुत्वा भगवत्प्रसादमालया पुरस्कृत्य तानेव समानेतुमयं प्रेषित इव लक्ष्यते।

राजा—एवमस्ति कोऽपि तत्र भगवच्चैतन्यानुग्रहपात्रम्।

सार्वभौमः—अथ किम्। अन्यथा कथमेवं स्यात्। तदाज्ञापय गोपीनाथाचार्याह्वानाय तेनैव सर्वे परिचीयन्ते।

(प्रविश्यापटीक्षेपेण।)

आचार्यः—एषोऽहमस्मि। तदाज्ञापयतु देवः किं विधेयमिति।

राजा—सार्वभौम, आदिश।

**सार्वभौमः**—भवतामी सर्वे परिचीयन्ते, तदस्मानपि प्रत्येकं परिचाय्यन्ताम् ।

**गोपीनाथाचार्यः**—बाढम् । (इत्युपविशति । नेपथ्ये हरिसंकीर्तनध्वनिः ।)

**सार्वभौमः**—(आकर्ण्य ।)

संकीर्तनध्वनिरयं पुरतो विभक्त-
शब्दार्थ एव समभूच्छ्रवणप्रमोदी ।
शब्दग्रहेण तदनन्तरमन्यरूपो
लब्धार्थ एव पुनरन्यविधो बभूव ॥ ३२ ॥

**राजा**—(निरूप्य ।) ईदृशं कीर्तनकौशलं क्वापि न दृष्टम् ।

**सार्वभौमः**—इयमियं भगवच्चैतन्यसृष्टिः ।

**राजा**—आचार्य, यस्मै भगवन्मालामयमर्पितवानयं कः ।

**गोपीनाथाचार्यः**—कथयामि प्रत्येकम् । अयमद्वैतः । अयं नित्यानन्दः ।

**सार्वभौमः**—अयं परिचीयते ।

**राजा**—कथमसौ कतिचिज्जनैः सह पृथगायाति ।

**सार्वभौमः**—सर्वादृतत्वादन्यसङ्गं नेहते ।

**गोपीनाथाचार्यः**—अयं श्रीवासः । अयमयं वक्रेश्वरः । अयमाचार्यरत्नः । अयमयं विद्यानिधिः ।

**सार्वभौमः**—बाल्ये मया दृष्टावेतौ ।

**गोपीनाथाचार्यः**—अयं हरिदासः । अयमयं गदाधरः । अयं मुरारिः । इमे श्रीवासस्य सहोदराः । अयं गङ्गादासः । अयं नृसिंहाचार्यः । इमे चान्ये नवद्वीपवासिनः । एते ममाप्यपूर्वाः । आज्ञा चेद्भवति तदा ज्ञात्वागच्छामि ।

**राजा**—तथैव क्रियताम् ।

**गोपीनाथाचार्यः**—यथारुचितं देवाय । (इति सत्वरं परिक्रम्य नेपथ्यस्थो भूत्वा त्वरितं पुनः प्रविश्य च ।) सार्वभौम, एष आचार्यपुरन्दरः । एष

हरिभट्टः। एष राघवः। एष नारायणः। एष कमलानन्दः। एष काशीश्वरः। एष वासुदेवो मुकुन्दस्य ज्यायान्। अयं शिवानन्दः। एष च नारायणः। एष वल्लभः। एष श्रीकान्तः। किं बहुना, सर्व एवामी श्रीचैतन्यपार्षदाः, नैकोऽप्यत्र तैर्थिकः।

**राजा**—कथममी जगन्नाथालयं पृष्ठतः कृत्वा अग्रतश्चैतन्यकृष्णालयमेव प्रविशन्ति।

**सार्वभौमः**—एष एव नैसर्गिकस्य प्रेम्णो महिमा।

**राजा**—(पुनरन्यतोऽवलोक्य।) अये, कथमयं वाणीनाथो रामानन्दानुजः सत्वरः प्रचुरतरैर्महाप्रसादान्नादिभिरुपसरति।

**सार्वभौमः**—हृदयज्ञोऽयं श्रीचैतन्यभगवतः। तदनुक्त एव महाप्रसादैरुपचरितुमेतानुपसर्पति।

**राजा**—भट्टाचार्य, 'मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः' इति वचनमुल्लङ्घ्यामी अद्य महाप्रसादमुरीकरिष्यन्ति।

**सार्वभौमः**—भट्टारक, स खल्वन्यः पन्थाः। सा तु भगवतः पारोक्षिकी आज्ञा। इयं तु साक्षात्कारिणी। तत्रापि भगवता स्वहस्तेन प्रसादीक्रियमाणं जगन्नाथप्रसादान्नम्। अत्र का विप्रतिपत्तिः। तथाच,

यदा यस्यानुगृह्णाति भगवानात्मभावितः।
स जहाति मतिं लोके वेदे च परिनिष्ठिताम्॥ ३३॥ इति।

अपि च—'तत्कर्म हरितोषं यत्' इत्युक्तेरस्य तोष एवैषामुद्देश्यो न तीर्थयात्राफलम्।

**राजा**—एवमेव। किंतु कथय रथयात्रा कदेति। त्वदुपदिष्टो मन्त्र एव मे हृदि लग्नः। तदत्र निमिषमात्रोऽपि कालः कल्पायत इव मे।

**सार्वभौमः**—परश्वः।

**राजा**—कः कोऽत्र भोः। आहूयतां परीक्षामहापात्रं काशीमिश्रश्च।

(प्रविश्य कश्चित्प्रणम्य।) देव, यथाज्ञापयसि। (इति निष्क्रम्य तावादाय पुनः प्रविश्य च।) देव, संप्राप्तावेतौ।

**राजा**—महापात्र, जगन्नाथदेवस्य यात्राविधौ भगवच्चैतन्यहृदयज्ञेनामुना काशीमिश्रेण यद्यदादिश्यते तदेव मदादेश इति ज्ञात्वा व्यवहर्तव्यम् ।

**महापात्रः**—यथाज्ञापयति देवः ।

**राजा**—मिश्र, त्वयापि भगवच्चैतन्यचित्तानुवृत्तिरहरहरेव कार्या ।

**मिश्रः**—मदीयमभीष्टमेवैतत् ।

**राजा**—अपि च येऽमी यावन्तो गौडाः समायाताः सन्ति तेषामपि यथा स्वाच्छन्द्येन भगवद्दर्शनं भवति तथा च विधेयम् ।

**उभौ**—यथाज्ञा देवस्य । (इति निष्क्रान्तौ ।)

**राजा**—भट्टाचार्य, उपसृत्य विलोकयेदमन्योन्यसंभाषणकौतूहलम् । सति तादृशेऽधिकारे मयेव तादृशपरमानन्दभोगाद्वञ्चितेन कथं भवितव्यम् । अहमपि भविष्यद्रथविजयकार्याकार्यपरिकलनायावहितो भवामि । (इति निष्क्रान्तः ।)

**सार्वभौमः**—ममाभीष्टमेव नरपतिरादिष्टवान्, तदधुना तथैव करोमि । (इति गोपीनाथाचार्येण कतिचित्पदानि गत्वा ।) अहो पुरतः ।

आनन्दहुंकारगभीरघोषो हर्षानिलोल्लासितताण्डवोर्मिः ।
लावण्यवाही हरिभक्तिसिन्धुश्चलः स्थिरं सिन्धुमधः करोति ॥ ३४ ॥

तदुपसर्पावः । (इत्युपसर्पतः ।)

(ततः प्रविशन्ति उक्तप्रकाराः सर्वे अद्वैतप्रमुखाः ।)

**अद्वैतः**—(पुरोऽवलोक्य ।) दामोदर, पुनर्मालान्तरं गृहीत्वा कोऽयमायाति ।

**दामोदरः**—अयं भगवत्पार्श्ववर्ती गोविन्दः । (प्रविश्य सत्वरं गोविन्दो मालामर्पयति ।)

**अद्वैतः**—(सादरं गृह्णाति ।)

**दामोदरः**—इदमिदं काशीमिश्राश्रमपदं तत्प्रविशन्तु । (अद्वैतादयः प्रवेशं नाटयन्ति ।)

सार्वभौमः—अहो, आश्चर्यम् ।

युगान्तेऽन्तः कुक्षेरिव परिसरे पल्लवलघो-
रमी सर्वे ब्रह्माण्डकसमुदयादेव वपुषः ।
यथास्थानं लब्धावसरमिह मान्ति स शतशः
सहस्रं लोकानां बत लघुनि मिश्राश्रमपदे ॥ ३५ ॥

(पुरोऽवलोक्य) अये, अयमसौ ।

अद्वैतेन्दोरुदयजनितोल्लाससीमातिशायी
श्रीचैतन्यामृतजलनिधी रिङ्गतीवोत्तरङ्गः ।
पूर्णानन्दोऽप्ययमविकृतः शश्वदुच्चैरखण्डः
खण्डानन्दैरपि कथमहो भूयसीं पुष्टिमेति ॥ ३६ ॥

(ततः प्रविशति यथानिर्दिष्टः श्रीचैतन्यः पुरीश्वरस्वरूपादयश्च ।)

श्रीकृष्णचैतन्यः—(उपसृत्य नित्यानन्दं प्रणम्याद्वैतं परिष्वजते ।)

अद्वैतः—(प्रतिपरिष्वजते ।)

सार्वभौमः—(निरूप्य ।)

प्रेमारण्यकरीन्द्रयोरिव मिथः प्रेम्णा मदोत्सिक्तयो-
रन्योन्यं करघट्टनाचटुलयोस्तारस्वरं गर्जतोः ।
अन्योन्यं गलदश्रुदानपयसा संसिक्तयोरेतयो-
रन्योन्यं परिरम्भ एष जयतादद्वैतचैतन्ययोः ॥ ३७ ॥

सर्वे—इतस्ततो भुवि दण्डवन्नमन्ति ।

भगवान्—(सर्वानेवालिङ्गनसंभाषणदर्शनादिभिरनुगृह्णाति ।)

अद्वैतः—(अदृष्टपूर्वान् परिचाययति ।)

श्रीकृष्णचैतन्यः—(अदृष्टपूर्वानपि तान्स्वयमेव नामग्राहं संबोधयति ।)

गोपीनाथाचार्यः—अहो, अतिचित्रम् ।

क्षेमं ते राघव ननु शिवं वासुदेव प्रियं ते
हंहो नारायण ननु शिवानन्द कल्याणमास्से ।
भव्यं हे शंकर नु कमलानन्दकाशीश्वरौ वां
भद्रं श्रीकान्त तव कुशलं स्वस्ति नारायणस्य ॥ ३८ ॥

अपिच ।

इति प्रियोक्त्या मधुरार्द्रया शनैरदृष्टपूर्वानपि दृष्टवत्प्रभुः ।
संबोधयत्येष किमीशताथवा प्रेमैव वा प्राक्तन एष सर्ववित् ॥ ३९ ॥

श्रीकृष्णचैतन्यः—

अद्यायं मे समजनि महानुत्सवः श्वः परश्वो
वान्यो नीलाचलशशधरस्योत्सवो गुण्डिचाख्यः ।
तुल्यौ यद्यप्यहह हृदयानन्दनिस्यन्दहेतू
यत्राद्वैतप्रकटनमसावुत्सवो मे प्रमोदः ॥ ४० ॥

(इति प्रत्येकमद्वैतादीन्भगवज्जगन्नाथप्रसादमालाचन्दनाभ्यां भूषयित्वा श्रीहस्तेन प्रसादनं किंचित्किंचिद्ददाति ।

सार्वभौमः—न मयेदानीमुपसर्तव्यम् । मामवलोक्य रसान्तरं भवितुमर्हति । गतप्रायमेवैतद्दिनद्वयं यात्रायाः सामग्रीसमवधानाय राज्ञा नियुक्तोऽस्मि । तदधुना तत्रैव गच्छामि । आचार्य, त्वमत्रैव तिष्ठ (इति निष्क्रान्तः )

गोपीनाथाचार्यः—(उपसृत्य ।) जयति जयति महाप्रभुः ।

श्रीकृष्णचैतन्यः—कथमाचार्योऽसि । एहि प्रणमाद्वैतम् ।

गोपीनाथाचार्यः—(तथा करोति ।)

अद्वैतः—(आलिङ्ग्य ।) जानामि भवन्तं विशारदस्य जामातरम् ।

श्रीकृष्णचैतन्यः—स्वत एव महत्तरोऽयम् ।

आचार्यः—वाणीनाथेन सह युक्त्या सर्वेषामवस्थानं कल्प्यताम् ।

गोपीनाथाचार्यः—यथाज्ञापयति भगवान् । (इति निष्क्रान्तः ।)

श्रीकृष्णचैतन्यः—वासुदेव, यद्यपि मुकुन्दो मे प्राक्सहचरस्तथापि त्वमद्य दृष्टोऽप्यतिप्राक्प्रियतमोऽसि ।

वासुदेवः—(सदैन्यम् ।) भगवन्, क्वाहं वराको मुकुन्दस्तु तवानुगृहीत एव चिरं तेन ईश्वरानुग्रहकालस्य । जन्मतया कनीयानप्यसौ मम ज्यायानेव ।

**श्रीकृष्णचैतन्यः**—शिवानन्द, त्वमप्यतीव मय्यनुरक्तोऽसीति जानामि ।

**शिवानन्दः**—

निमज्जतोऽनन्तभवार्णवान्तश्चिराय मे कूलमिवासि लब्धः ।
त्वयापि लब्धं भगवन्निदानीमनुत्तमं पात्रमिदं दयायाः ॥ ४१ ॥

(इति भूमौ निपतति ।)

**श्रीकृष्णचैतन्यः**—राघव, त्वमतिप्रेमपात्रमसि मे ।

**राघवः**—(अनुत्तरेणैव प्रत्युत्तरयन्प्रणिपतति ।)

**श्रीकृष्णचैतन्यः**—स्वरूप, यद्यप्ययं शंकरो दामोदरानुजस्तथापि मे । (इत्यर्धोक्ते दामोदरं निरीक्षते ।)

**दामोदरः**—नाथ, ममेदमतिसौभाग्यमेतत् । अयं समाप्यतां वाक्शेषः ।

**श्रीकृष्णचैतन्यः**—दामोदरे सादरः स्नेहः । अत्र तु निरवकरम् ।

**प्रेमभक्तिः**—तदयमत्रैव भवत्समीपे तिष्ठतु । गोविन्द, त्वयाप्यानुकूल्यं विधेयम् ।

**उभौ**—यथाज्ञापयति देवः । (प्रविश्य सत्वरम् ।)

**गोपीनाथाचार्यः**—स्वामिन्, यथाज्ञमेव सर्वं सुसंपादितम् । विशेषतो गदाधरस्य ममेश्वरस्य समीपे समीचीनमेव स्थलं सार्वकालिकं जातमस्ति ।

**श्रीकृष्णचैतन्यः**—अद्वैत, अयं द्वितीयो मुनीन्द्र इव पुरीश्वरः । यः किल तव गुरोः प्रियशिष्यः । तदेनं प्रणम ।

**अद्वैतः**—(तथा करोति । सर्वे तथैव प्रणमन्ति ।)

**श्रीकृष्णचैतन्यः**—आचार्याद्वैत, अयमयं स्वरूपः । स्वंरूपमस्यास्तीति निरुक्तेरविकृत एवायं मम हृदयमेवायमिति जानीयाः ।

**अद्वैतः**—एवमेव । (इति प्रणमति । सर्वे प्रणमन्ति ।)

**गोपीनाथाचार्यः**—भगवन्नाज्ञाप्यताममीषां विश्रामाय ।

**श्रीकृष्णचैतन्यः**—आचार्य, स्वयमेवोच्यतां याहीति मया कथं वक्तव्यम्।

**अद्वैतादयः**—(इङ्गितं बुद्ध्वा निष्क्रान्ताः।)

**श्रीकृष्णचैतन्यः**—स्वामिन्, पुरीश्वर, प्रणयिन्, स्वरूप, अद्याहं पूर्णोऽस्मि।

**स्वरूपः**—स्वामिन्,

ईश्वरो येन पूर्णोऽपि पार्षदैरेव पूर्यते।
पूर्णोऽपि रजनीनाथो रिक्त एवांशुभिर्विना॥ ४२॥

तदागच्छन्तु। सायाह्नो जातः। भवन्तमन्तरेण पुरीश्वरोऽप्यकृतभिक्ष एव।

**श्रीकृष्णचैतन्यः**—एवमेव। (इति निष्क्रान्ताः।)

(नेपथ्ये।)

शतधृतिरपि धृतिहीनः सहस्रनयनोऽपि परमान्धः।
नीलगिरीन्दुस्यन्दनयात्रासंदर्शनौत्कण्ठ्यात्॥ ४३॥

**गोपीनाथाचार्यः**—(आकर्ण्य।) अहो, मुहूर्तमिव गतं दिनद्वयम्। यदयं रथयात्राप्रसङ्गो भट्टाचार्येण प्रस्तूयते तन्निभालयामि। (इति कियद्दूरं गत्वा।) अहो, चित्रम्।

मूर्तास्त्रय इव वेदाः शंभोस्त्रीणीव नयनानि।
तिस्र इवामरसरितो धाराः पुरतो रथत्रयी स्फुरति॥ ४४॥

(पुनर्नेपथ्ये)

आयातोऽद्य रथोत्सवस्य दिवसो देवस्य नीलाचला-
धीशस्याद्य पुरो नटिष्यति निजानन्देन गौरो हरिः।
विश्रान्तिं नटनावसानसमये कर्ताद्य जातीवने
हन्ताद्यैव मनोरथः सफलतां यास्यत्ययं मादृशः॥ ४५॥

**गोपीनाथाचार्यः**—अहो, गजपतेर्महाराजस्यालाप इव श्रूयते तदवधातव्यमवश्यमिदम्। (इति निरूप्य।) सत्यमेवायं भट्टाचार्येण सह

संकथयन्नुत्कण्ठते महाराजः । पश्यामि को विलम्बो जगन्नाथरथारोहणस्य । (इति पश्यति । नेपथ्ये काहलादिनिर्घोषः ।)

**गोपीनाथाचार्यः**—(निरूप्य) अहो,

हृदयमिव महः समाधिभाजामुदयगिरेरिव शीर्षमुष्णरश्मिः ।
अयमखिलदृशां रसायनश्री रथमधिरोहति नीलशैलनाथः ॥ ४६ ॥

(पुनर्निरूप्य ।)

अद्वैताद्यैरखिलसुहृदां मण्डलैर्मण्ड्यमानो
गायद्भिस्तैः कतिभिरपरैः श्रीस्वरूपप्रधानैः ।
श्रीमद्वक्रेश्वरमुखसुखाविष्टभूयिष्ठबन्धुः
सिन्धुः प्रेम्णामयमिह नरीनर्ति गौरो यतीन्द्रः ॥ ४७ ॥

(नेपथ्ये कलकलः ।)

**गोपीनाथाचार्यः**—(सहर्षम् ।)

गौडाख्यैरथ कर्षिभिर्जनचयैरादाय वामे करे
हेलोल्लासितपीनरज्जुपटलीसंकर्षणव्याजतः ।
स्थायंस्थायमहो कचिद्द्रुततरं धावत्यमन्दं कचि-
द्धावंधावमहो स्थितः स्थिरतरं स्वेच्छावशः स्यन्दनः ॥ ४८ ॥

(पुनर्नेपथ्ये संकीर्तनकोलाहलः ।)

**गोपीनाथाचार्यः**—(आलोक्य सकौतुकम् ।)

प्रचलति जगन्नाथे गौरोऽपसर्पति संमुखा-
त्स्थितवति जगन्नाथे गौरः प्रसर्पति तत्पुरः ।
अतिकुतुकिनावेवं देवौ परस्परमुत्सुकौ
कलयत इव क्रीडां नीलाचलेन्द्रमुनीश्वरौ ॥ ४९ ॥

(पुनर्निभाल्य) अहो,

स्थितवति बलगण्डीमण्डपस्योपकण्ठं
भगवति जगदीशे शान्तनृत्यो यतीन्द्रः ।
उपवनमनुगच्छन्पार्षदैः प्रेमवद्भिः
सह जयति नितान्तश्रान्तितो विश्रमाय ॥ ५० ॥

तदधुना नरपतिनापि गूढवेषेण तत्राभिसर्तव्यमिति भट्टाचार्यस्येङ्गितेन ज्ञातमस्ति । तदहमपि सत्वरमुपसर्पामि । (इत्युपसर्पति ।)

(ततः प्रविशति नृत्यानन्दानुभवनिस्पन्दो निमीलितनयनो नयनाभिराम उपवनमण्डपमध्यास्य प्रसार्यमाणलोलच्चरणकमलनालदण्डयुगलो गलल्लोचनजलधौतवक्षाः साक्षादिव प्रेमानन्दः श्रीकृष्णचैतन्यः प्रतितरुमूलमेकैकमुपविष्टास्तूष्णीका पार्षदाश्च ।)

**भगवान्**—

अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन ।

(इति श्लोकार्धमेव भूयो भूयः प्रमीलितनयन एव पठति ।)

**गोपीनाथाचार्यः**—(आलोक्य) अहो, प्रेमानन्दास्वादमहिमा देवस्य अनुभूतस्य नृत्यकालीनभगवत्कृष्णसाक्षात्कारानन्दस्य ब्रह्मानन्दतोऽपि चमत्कारकारणत्वं चर्वणयास्वादयति । अथेति उच्चावचशास्त्रसकलप्रतिपाद्यावबोधपरिसमाप्तौ । अत इति ब्रह्मानन्दादपि चमत्कारकारकत्वात् । हंसाः सारासारविवेचनचतुराः पादाम्बुजं श्रयेरन् । कुतः आनन्ददुघमिति स्वानुभूतानन्दमाहात्म्यसूचनमिदम् । (परितोऽवलोक्य ।) अहो, इत एव सर्वे परमभागवताः । तथाहि ।

निःस्पन्दमुज्ज्वलरुचः सुशिखाः सुपूर्ण-
स्नेहास्तमःक्षयकृतः प्रतिशाखिमूलम् ।
आभान्ति शोभनदशास्त इमे महान्तो
निर्वातमङ्गलमहोत्सवदीपकल्पाः ॥ ५१ ॥

भवतु । अत्रैव क्वापि निभृतमुपविश्य राज्ञः प्रवेशं प्रतिपालयामि । (इति तथा करोति ।)

(ततः प्रविशति त्यक्तराजवेशः परिहितधौतवसनयुगलो राजा ।)

**राजा**—(सोत्कण्ठम् ।)

उत्कण्ठा भयतर्कयोर्बलवतोराच्छादनं कुर्वती
मामुच्चैस्तरलीकरोति चरणौ हा धिक् कथं स्तब्धुतः (?) ।
हंहो देव परीक्षयाद्य भवतः प्रायः परीक्षा मम
प्राणानामपि भाविनी नहि मम प्राणेषु कोऽपि ग्रहः ॥ ५२ ॥

(इति शनैः शनैः परिक्रामति ।)

**गोपीनाथाचार्यः**—(राजानं निर्वर्ण्य ।) अहो, चित्रम् ।

प्रभावमात्रैकनृदेवचिह्नो वीरो रसः सुप्त इवायमग्रे ।
आनन्दशङ्काभयतर्कमिश्रः कृच्छ्रेण विन्यस्यति पादपद्मम् ॥ ५३ ॥

(परितः सर्वे आत्मगतम् ।) अहो, मङ्गलसूत्रमुद्रितकरोऽयं राजा प्रतापरुद्रः कथमयं गृहीततपस्विवेषोऽकस्मादुपसर्पति स्वामिनामुद्वेगो भावी । तदवलोकयाम किमयं करोतीति ।

**राजा**—(शनैरितस्ततोऽवलोकयन्सहसैवोपसृत्य दोलायमानं भगवच्चरणकमलयुगं परिषद्दीर्घाभ्यां दोर्भ्यां दृढतरमालिङ्गति ।)

**सर्वे**—(आलोक्य ।) अहो, महानयमनर्थः । निमीलितनयनकमलेन स्वानन्दावेशविवशेन भगवतायमलक्षित एव यद्भगवच्चरणौ दधार तदस्य न विघ्नः किं भावि ।

**भगवान्**—(स्वानन्दस्थ एव निमीलिताक्ष एव निभालनेनैव गाढं परिष्वज्य ।)

को नु राजन्निन्द्रियवान्मुकुन्दचरणाम्बुजम् ।
न भजेत्सर्वतोमृत्युरुपास्यममरोत्तमैः ॥ ५४ ॥

(इति पुनः पुनः पठति ।)

**गोपीनाथाचार्यः**—अहो, कौतुकम् ।

साहसं क्वच गुणाय कल्पते क्वापि दूषणतया च सिद्ध्यति ।
साहसेन यदकारि भूभुजा तत्तपोभिरखिलैश्च नाप्यते ॥ ५५ ॥

(पुनर्निभाल्य ।)

महामल्लैर्यस्य प्रकटभुजवक्षःस्थलतटी-
विनिष्पेषोद्भग्नास्थिभिरिव विदध्रे विकलता ।
स एवायं माद्यत्करिवरकराक्रान्तकदली-
तरुस्तम्भाकारो भवति भगवद्बाहुदलितः ॥ ५६ ॥

(नेपथ्ये कलकलः ।)

**भगवान्**—(राजानं परिष्वज्य तत्कलकलाकलितरथप्रस्थानसत्वरः पुनर्जगन्नाथदिदृक्षया तथाविधस्वानन्दस्थ एव निष्क्रामति ।)

**सर्वे**—(यथायथं तमनुनिष्क्रामन्ति ।)

**गोपीनाथाचार्यः**—(उपसृत्य ।) महाराज, जगन्नाथदर्शनार्थं गतो देवः । संप्रति भवन्तोऽपि चलितुमर्हन्ति । (इत्यानन्दतन्द्रितं राजानमादाय निष्क्रान्तः ।) (इति निष्क्रान्ताः सर्वे ।)

प्रतापरुद्रानुग्रहो नामाष्टमोऽङ्कः ।

---

नवमोऽङ्कः ।

(ततः प्रविशति किंनरमिथुनम् ।)

**पुरुषः**—प्रिये, गतागतेभ्योऽपि संवत्सरेभ्यः खलु जगन्नाथस्य गुण्डिचोत्सवः परमरमणीयो दृष्टः ।

**स्त्री**—कथंविअ । (क)

**पुरुषः**—अस्मिन्नब्दे तु मूर्तिमतानन्देनैव कनकगिरिगौरेण यतीन्द्रवेषधारिणा भक्तावतारेण श्रीकृष्णचैतन्येन महोत्सवोऽयं सुरसत्वेन परमरमणीयो विहितः ।

**स्त्री**—हद्धी हद्धी, अहं कधं सङ्गेण णीदा । मए दट्ठुं ण पारिदं । (ख)

**पुरुषः**—प्रिये, आगामिन्यब्दे दर्शनीयो भवत्या ।

**स्त्री**—आआमिणि अद्दे जइ एवं होइ । (ग)

**पुरुषः**—इतः प्रभृति तेनात्रैव स्थातव्यम् ।

**स्त्री**—एत्थ को णिअमो । (घ)

**पुरुषः**—जानामि तत्त्वम् ।

**स्त्री**—कधं जाणीदं । (ङ)

**पुरुषः**—परस्परं कथयतां तज्जनानां तज्जनानाश्चितचरित्रविदां कथयैव ।

---

(क) कथमिव ।

(ख) हा धिक् हा धिक्, अहं कथं सङ्गेन नीता । मया द्रष्टुं न प्राप्तम् ।

(ग) आगामिन्यब्दे यद्येवं भवति ।

(घ) अत्र को नियमः ।

(ङ) कथं ज्ञातम् ।

स्त्री—केरिसी सा कहा । (क)

पुरुषः—प्रिये, श्रूयताम् । अस्य त्रिविध एव लोकानुग्रहप्रकारः ।

स्त्री—केरिसो तिण्णविहो । (ख)

पुरुषः—एकः साक्षात्कारी, द्वितीयः परहृदयप्रवेशलक्षणः, तृतीयश्चिन्तनमात्राविर्भावरूपः ।

स्त्री—विवेइअ कहेहि । (ग)

पुरुषः—ये खलु पुरुषोत्तमक्षेत्रागमनसमर्थास्तेषां साक्षात्कारी । तथा हि प्रतिसंवत्सरं सरहंसो नानादेशतः सर्वे जगन्नाथदर्शनतोऽपि तद्दर्शनबद्धोत्कण्ठा अदृष्टपूर्वा अश्रुतपूर्वाः परःसहस्राः प्राणिन उपतिष्ठन्ति ।

स्त्री—तदो तदो । (घ)

पुरुषः—ततस्तेषु गौडीयाः प्रिया गौडीयानां मध्ये येऽतिप्रियाः शतशो दृष्टवन्तस्तेऽपि शुभादृष्टवन्तो यथामी ।

नरहरिरघुनन्दनप्रधानाः कतिचन खण्डभुवोऽप्यखण्डभाग्याः ।
प्रथममिममदृष्टवन्त एते प्रतिशरदं पुरुषोत्तमं लभन्ते ॥ १ ॥

कुलीनग्रामीणा अपि च गुणराजान्वयभुवो
जना रामानन्दप्रभृतय इमे देवसुहृदः ।
तथा न्यायाचार्यादय उपचितप्रेमसरसा
महाविद्वांसोऽमी प्रतिशरदमात्रोपगमिनः ॥ २ ॥

भगवन्नाम न्यायाचार्यस्तु पुरुषोत्तम एव भगवच्चैतन्यदर्शनाकाङ्क्षी यावज्जीवं स्थितः । एवमेषां साक्षादनुग्रहः । आगमनासमर्थानां तु परहृदयमारुह्यानुग्रहः क्रियते । हृदयारोहयोग्यास्त्वद्वैतनकुलब्रह्मचार्यादयः ।

स्त्री—किंचि कधेहि । (ङ)

---

(क) कीदृशी सा कथा ।

(ख) कीदृशस्त्रिविधः ।

(ग) विवृत्य कथय ।

(घ) ततस्ततः ।

(ङ) किंचित्कथय ।

**पुरुषः**—अद्वैतारोहवार्ता तु प्रथीयसी, तत्कथनं बहुकालसाध्यम्। नकुलब्रह्मचारिहृदयारोहः श्रूयताम्।

**स्त्री**—कधेहि, अवहिदह्मि। (क)

**पुरुषः**—अस्ति कश्चिदम्बुग्रामे परमवैष्णव आजन्मब्रह्मचारी नकुलो नाम। तस्यैकस्मिन्दिवसे ग्रहग्रस्तस्येव कस्यामपि दशायामुत्पन्नायामानन्दास्रपुलकनिर्भरस्य दर्शनमात्रेणैव सर्वेषां हृदयकुहरे श्रीचैतन्यावेशोऽयमस्य जात इति प्रत्ययमुत्पादयत एव कतिचिदहोरात्रा गताः।

**स्त्री**—तदो तदो। (ख)

**पुरुषः**—तदनु

गौरत्विषा कपिशयन्ककुभः समन्ता-
दानन्दभोगपरिलोपितबाह्यवृत्तिः।
आबालवृद्धतरुणैरथ लक्षसंख्यै-
र्लोकैरभूत्प्रणयिभिः परिपूज्यमानः॥ ३॥

**स्त्री**—तदो तदो। (ग)

**पुरुषः**—ततो दैवात्तस्मिन्काले तत्रागतेन भगवच्चैतन्यपार्षदेन शिवानन्देन तमुदन्तमत्यन्तसंदिह्यमानतयात्यदिदृक्षुणा मनसि कृतम्—'अहो, किमेतस्य दर्शनेन, साक्षादेव मया दृष्टोऽस्ति भगवान्। तदालोकसुखसदृशं किमस्य दर्शनेन भविष्यति सुखम्। नैव' इति निवर्तमानेन पुनर्मनसि कृतम्—'अहो, यद्ययं सर्वलोकबहिर्वर्तमानं मां स्वयमेवाहूय स्वसमीपं नीत्वा मामकमिष्टमन्त्रं प्रख्यापयति तदा सत्यमेवात्र तस्यावेशो जातः' इति चिन्तयित्वा प्रसारिणो जनसमूहस्य बहिः स्थितवति शिवानन्दे यावदावेशं तूष्णीं स्थितोऽप्यसौ 'कः कोऽत्र भोः, दूरे वर्तमानः शिवानन्द आहूयताम्' इति निदेशमात्रेण धावद्भिरेव कतिभिरितस्ततो नामग्राहं विचिन्वद्भिरति-

(क) कथय, अवहितास्मि।
(ख) ततस्ततः।
(ग) ततस्ततः।

दूरे स्थितं तमादाय तन्निकटमाययौ । अनन्तरं च तेन 'शिवानन्द, भवता मनसि विचारितं यत्, तदाकर्ण्यतां भवदीय इष्टमन्त्रश्चतुरक्षरो गौरगोपालदेवताकः' इत्याकलय्य तेन निर्णीतं सत्यैवेयं प्रथेति ।

स्त्री—अज्जउत्त, तीत्तओ केरिसो । (क)

पुरुषः— तृतीयस्तु चिन्तनमात्राविर्भावो यः सोऽपि श्रूयताम्—'एकदा तस्यैव शिवानन्दस्य भागिनेयः श्रीकान्त एकक एव प्रथमं श्रीपुरुषोत्तममागत्य भगवच्चैतन्यचरणौ ददर्श । अस्मिन्नेव समये कौतुकवशात्पुरीश्वरस्वरूपादिसमक्षं भगवता किंचिज्जगदे जगदेकबन्धुना 'श्रीकान्त, अस्मिन्नब्देऽद्वैतादयो दयोद्धुरा वक्तव्यास्ते यथा नायान्ति, मयैव तत्र गन्तव्यम्' इति । अपि च शिवानन्दोऽपि भगवन्मातुलो वक्तव्यः पौषे मासि तत्रोपसन्नेन मया भवितव्यम्, तत्र जगदानन्दोऽस्ति तत्रैव भिक्षा कर्तव्या' इति निवृत्तेन श्रीकान्तेन भगवत्संदेशे कथिते सति सर्वेऽद्वैतादयश्चलनोद्यमाच्छिथिलीबभूवुः । शिवानन्दस्तु भगवदागमनमभिलिलशिषुर्भगवद्भिक्षायामिदं लगिष्यतीति कृत्वा भगवत्प्रियत्वेन वास्तूकवास्तुकदलीगर्भोत्थाकनिशादिसामग्रीसमवधानाय स्थितवान् ।

स्त्री—तदो तदो । (ख)

पुरुषः—ततो दैवाद्गोदावरीतः समायातेन रामानन्दरायेणोपबोधितो भगवान् न गन्तुमीष्टे ।

स्त्री—तदो तदो । (ग)

पुरुषः—ततोऽसौ शिवानन्दः श्रीनृसिंहानन्दब्रह्मचारीति प्रथितं परमयोगीन्द्रं साक्षान्नृसिंहमिव प्रद्युम्नब्रह्मचारित्वेन पूर्वख्यातावपि भगवतैव नृसिंहोपासनासिद्धत्वेन नृसिंहानन्द इति कारितसंज्ञं समये समुवाच—'स्वामिन्, आयास्यामि' इति कृत्वा भगवान्नायातः । वास्तूकशाकमवलोक्य मनोदुःखमेव जायते ।

---

(क) आर्यपुत्र, तृतीयः कीदृशः ।

(ख) ततस्ततः ।

(ग) ततस्ततः ।

स्त्री—तदो तदो। (क)

पुरुषः—ततस्तेनोक्तम्। मयैवानेतव्यो दिनद्वयमपेक्षतामिति तत्प्रभावज्ञोऽसौ तथैव श्रद्दधे। स च नृसिंहानन्दो नृसिंहानन्दोऽपि तं समयमारभ्य समाधिस्थो दिनद्वयान्तरे शिवानन्दमाहूय 'अये, भगवच्चैतन्यो राघवालये समानीतोऽस्ति। प्रातरत्रागमिष्यति मयैव पक्तव्यं भिक्षा च दातव्या' इति श्रुत्वा तस्मिन्नपि तथोद्युक्ते सति स्वयमुषसि कृतस्नानः शुचितरो भूत्वा पाके प्रवृत्तः स्वेच्छापूर्वं यथेष्टमेव पाचितवान्। अनन्तरं तस्मिन्नेव समये श्रीचैतन्यस्य जगन्नाथस्य नृसिंहस्य च पृथक् त्रयो भोगा विभज्य निष्पादिताः। अनन्तरं तत्तन्नाम्ना समर्प्य बहिर्भूय निमीलितचक्षुरान्तरेण चक्षुषा पश्यति त्रीनेव भोगानेक एव भगवान्भुङ्क्ते। अनन्तरं संजातमहानन्दो गलदश्रुधारः सारवमुच्चैः प्रणयामर्षकृताक्षेपमिव भद्रं भो भद्रं जगन्नाथेन सह तवैक्यमतो जगन्नाथस्य भोगो भुज्यतां नाम, मम नृसिंहस्य भोगः कथं भुज्यते, नृसिंहोऽद्य मयायमुपोषित इत्युच्चैराक्रन्दञ्शिवानन्देनोक्तम् स्वामिन्, कथमाक्रुश्यते' इति।

स्त्री—तदो तदो। (ख)

पुरुषः—ततस्तेनोक्तम् 'तव गोस्वामिना चैतन्येन भोगत्रयमेव भुक्तं नृसिंहस्योपवासो जातः' इति।

स्त्री—तदो तदो। (ग)

पुरुषः—ततः शिवानन्देनोक्तम्—'स्वामिन्, नृसिंहार्थमन्या भोगसामग्री कर्तव्येति। तथाकृते स्वस्थो बभूवेति स्थिते शिवानन्दस्य संशयो जातः—'किमनेनावेशवशादेवोक्तमथवा सत्यमेव' इति मनसि कृत्वा पुनरन्यस्मिन्संवत्सरे पुरुषोत्तममासाद्य भगवच्चैतन्यसविधे गतः। प्रसङ्गतो नृसिंहानन्दस्य तन्महिमकथनेऽवान्तरभूता पाकक्रिया तस्यातिसमीचीनेत्यपि वदति भगवति सर्वेषु संदिहानेषु मया गते संवत्सरे पौषे मासि तस्य भिक्षा कृता।

---

(क) ततस्ततः।

(ख) ततस्ततः।

(ग) ततस्ततः।

तत्र तस्य पाककौशलं ज्ञातमित्युक्ते पुनः सर्वे संदिग्धा एव स्थिताः । शिवानन्दस्तु निःसंदेहो बभूवेति व्याख्यातस्ते त्रिविधोऽनुग्रहप्रकारः ।

स्त्री—अच्चरिअं अच्चरिअं । ता एदं पि कधेहि । रामाणन्देण कहं तत्थ गन्दुं णिसेहो किदो । (क)

पुरुषः—प्रिये, स तावद्भगवतोऽतिप्रणयी तद्विच्छेदं न सहते । तेन तदुपरोधान्मथुरां जिगमिषुरपि वर्षद्वयमद्य श्व इति कृत्वा विलम्बितो भगवान् ।

स्त्री—अदो वरं एत्थज्जेव वट्टिस्सदि । अहवा महुरां गमिस्सदि । (ख)

पुरुषः—प्रिये, अधुना तु चिरमनुनीय तमेव रामानन्दं तेनानुमतं गौडवर्त्मन्येव गन्तुमुद्यतोऽस्ति ।

स्त्री—अज्जउत्त, पुणो एत्थ आअमिस्सदि । (ग)

पुरुषः—अथ किम् ।

स्त्री—एत्थ अत्थि संदेहो । जदो महुरा क्खु एदस्स पिअट्ठाणं । (घ)

पुरुषः—यद्यप्येवं तथापि ।

आपामरं प्राणिन उद्दिधीर्षोर्नीलाचलेन्दोरतिभारमेतम् ।
लघूकरिष्यन्पुरुषोत्तमस्थो भूयोऽपि भावी पुरुषोत्तमोऽयम् ॥ ४ ॥

स्त्री—आं, होइ एवं होइ । (ङ)

(नेपथ्ये ।)

(भट्टाचार्य, कथं रामानन्देनास्मिन्कर्मणि कृतानुमतिः ।)

पुरुषः—प्रिये, श्रुतमिदं यदभिहितं मया तदेवाधुना तद्विच्छेदविधुरो गजपतिरपि सार्वभौमेन सह संकथयन्नास्ते । तदावामपि भगवन्तं नीलाचलचन्द्रं गानेनोपस्थातुं गच्छाव । (इति निष्क्रान्तौ ।)

---

(क) आश्चर्यमाश्चर्यम् । तदिदमपि कथय । रामानन्देन कथं तत्र गन्तुं निषेधः कृतः ।

(ख) अतः परमत्रैव स्थास्यति । अथवा मथुरां गमिष्यति ।

(ग) आर्यपुत्र, पुनरत्रागमिष्यति ।

(घ) अत्रास्ति संदेहः । यतो मथुरा खल्वस्य प्रियस्थानम् ।

(ङ) आं, भवति एवं भवति ।

(प्रवेशकः।)

(ततः प्रविशत्यासनस्थो राजा सार्वभौमश्च।)

**राजा**—भट्टाचार्य, रामानन्दस्याग्रहपाशग्रन्थिशैथिल्येनैव भगवान्ग्रथितः।

**सार्वभौमः**—ईश्वरेण सार्धं किमधिको हठः कर्तुं शक्यते। तथापि वर्षद्वयमेव विलम्बितः।

**राजा**—भट्टाचार्य, रामानन्देन मे महानेवोपकारः कृतः। तथाहि—

आनीतो राजधान्याः पथि पुरुकरुणः कारितं चेक्षणं मे
स्पर्शः पादाम्बुजस्य व्यधित मम दुरापोऽपि सम्यक्सुखापः।
वाक्पीयूषं च सानुग्रहमतिमधुरं पायितं श्रोत्रपेयं
यन्नाभूद्भूरियत्नैस्तदजनि सहसा शून्यमन्तस्तथापि॥ ५॥

**सार्वभौमः**—महाराज, रामानन्दो हि भागवतोत्तम एव। तथा हि—

'प्रणयरशनया धृताङ्घ्रिपद्मः स भवति भागवतप्रधान उक्तः'

तेनास्य भगवान्वश एव। अतस्तदुपरोधेन भगवता त्वय्येतादृशोऽनुग्रहः कृतः।

**राजा**—रामानन्देन कियद्दूरमनुव्रजितव्यम्।

**भट्टाचार्यः**—भद्रकपर्यन्तमिति श्रुतम्।

**राजा**—स्वामिनः सङ्गे कियन्तश्चलिताः।

**सार्वभौमः**—पुरीश्वरदामोदरजगदानन्दगोपीनाथगोविन्दाद्याः पञ्चषा एव।

**राजा**—हन्त,

यदपि जगदधीशो नीलशैलस्य नाथः
प्रकटपरमतेजा भाति सिंहासनस्थः।
तदपि च भगवच्छ्रीकृष्णचैतन्यदेवे
चलति पुनरुदीचीं हन्त शून्या त्रिलोकी॥ ६॥

**सार्वभौमः**—राजन्, निरुपधिप्रेम्णो हीदृशः प्रकाशः।

**राजा**—अस्मदीयः कोऽपि न गतः प्रभोरनुपदम्।

**सार्वभौमः**—राजन्, प्रेम्णैवेदमुच्यते क तस्य त्वदीयजनापेक्षा । तथापि तत्राधिकारं यावत् तव लेखमादाय पूर्वमेव कश्चिद्गतोऽस्ति, करिष्यति च स एव सर्वसमाधानम् ।

प्रतिवसति नवीना वासमग्रे विधाय
प्रतिगृहमुपचारैर्भूरिभिः पूरयित्वा ।
कृतसुरचनमुच्चैस्तत्र तत्राभियुक्तैः
पदविहरणखेदं धुन्वते ते विशन्तः ॥ ७ ॥

भगवांस्तु रामानन्दस्य कृतिरियमित्येव जानाति ।

(प्रविश्य ।)

**दौवारिकः**—देव, रामानन्दादयो द्वारमधितिष्ठन्ति ।

**राजा**—त्वरितमानीयताम् ।

**दौवारिकः**—यथाज्ञापयति ।

(इति निष्क्रम्य तानादाय प्रविशति ।)

**राजा**—(सादरमुपवेश्य) कथय कियद्दूरं भवाननुगतो देवम् ।

**रामानन्दः**—इत इतो निवर्तस्वेति प्रतिपदमुक्तोऽपि भद्रकपर्यन्तमनुगतवानस्मि । महाराज, दुस्त्यजो हि व्यवहारमार्गः । यतः—

तमपि परमदीनोद्धारिकारुण्यसिन्धुं
शिव शिव परिहाय त्वद्धियैवागतोऽहम् ।
कथमहह न जातस्तत्र मे देहपातः
कुलिशकठिनमूर्तेर्हा यतोऽहं निवृत्तः ॥ ८ ॥

(इत्यश्रूणि मुञ्चति ।)

**सार्वभौमः**—रामानन्द, त्वमतिधीरोऽसि कथमेवमुत्ताम्यसि । ईश्वरो हि तथाविधलील एव व्रजवासिनो विहाय मथुरां गतः, पुनस्ततोऽपि द्वारवत्यां, पुनस्ततोऽपि कचित्कचित् । तत्रत्याः कथं सहन्तिस्म तद्विरहम् । यद्यपि दुःसह एव भगवद्विरहस्तथापि स एव तं साहयते । तदलमनुशोचनेन । राजानमधुना सान्त्वयितुमर्हसि न पुनः स्वखेदप्रकटनेन खेदयितुम् ।

**राजा**—कथय ।

**रामानन्दः**—भवदधिकारं यावद्भवदीया एव गच्छन्ति। तदूर्ध्वं मदीयाः पथि प्रज्ञा एव गौडराष्ट्रं यावद्यास्यन्ति केचित्तेषां कियद्दूरत एवागमिष्यन्ति, केचिद्दूरतरं यास्यन्ति।

(प्रविश्य।)

**दौवारिकः**—देव महाप्रभुमनुव्रजन्तो ये रायस्य मनुजाश्चलिताः सन्ति तेषां किमन्तः समायाताः।

**राजा**—प्रवेश्यन्तामविचारेणैव।

**दौवारिकः**—(तथा करोति।)

(प्रविश्य।)

**पुरुषः**—जयति देवः।

**रामानन्दः**—कथयत रे, कियद्दूरं भगवन्तो गताः।

**पुरुषः**—कुलियाग्रामं यावत्।

**राजा**—(सार्वभौममुखं निरीक्षते।)

**सार्वभौमः**—देव, नवद्वीपपारे पारेगङ्गं कश्चन तन्नामा ग्रामोऽस्ति।

**राजा**—आमूलं कथय।

**पुरुषः**—देव, इतो देवाधिकारं यावत्तावत्तव प्रभावेनैव निर्वाहितवर्त्मसौकर्या अचङ्क्रमणेनैव सर्वे गतवन्तः। गौडसीम्नि प्रवेष्टुं त्रयः पन्थानः, द्वयं रुद्धं एकस्तु जलदुर्गः। तमेवोद्दिश्य चलिते सति तत्सीमाधिकारी तुरुष्कोऽरुष्कोपकार इव सर्वेषां मर्महा महामद्यपो दुर्वृत्तचक्रचूडामणिः। 'इतो देशाद्ये गच्छन्ति तेषां दुर्गतिः क्रियते' इति श्रुत्वा सर्वेषामेव भयमुत्पन्नम्। महाप्रभवे कोऽपि न श्रावयति। अस्मत्सीमाधिकारिणोक्तम्—'अत्र कियान्विलम्बः क्रियतां यावन्मयानेन संधिः संधीयते' इत्येतावत्कथनसमकालमेव तस्यैव कश्चिदस्मत्सीमाधिकारिणः समीपमागतः।

**राजा**—ततस्ततः।

**पुरुषः**—आगत्य कथितम्। यदि त्वमनुमन्यसे तदा भवद्देशादागच्छन्तं श्रीकृष्णचैतन्यदेवमहं विलोकये।

**राजा**—ततस्ततः।

पुरुषः—ततोऽनेनोक्तम् । त्रिचतुरैश्चेदायाति तदायातु नामेति श्रुत्वा तथैवागतो भगवत्पादसमीपभूमौ निपतितश्चिरं प्रणनाम । ततः सर्वैरुक्तम्—'भगवन्, अस्य साहाय्येनैव सुखेन गन्तुं शक्यते । एनं प्रति कृपावलोकः क्रियताम्' इति तदनुरोधेन तं प्रति कृतदृक्पाते भगवति स यवनः पुलकाश्रुगद्गदस्वरो भवन् ग्रहग्रस्त इव जातः । ततो गोपीनाथाचार्येणोक्तम्—'अये, महाप्रभुरयं सुखेन कथं चलति' ।

**राजा**—ततस्ततः ।

**पुरुषः**—ततस्तेनोक्तं कियद्दूरं भवद्भिर्गन्तव्यम् । तदनु गोपीनाथेनोक्तम्—'गन्तव्यं तावत्पाणीयहाटीपर्यन्तमिदानीम्' ।

**राजा**—ततस्ततः ।

**पुरुषः**—ततः ।

प्रफुल्लरोमा गलदश्रुधारः सगद्गदं किंचिदसौ जगाद ।

अहो मदीयं महदेव भाग्यं देवस्य साहाय्यविधौ भवेयम् ॥ ९ ॥ इति सकलसज्जननाविकैर्वाह्यमाना नवीना तरणिर्मध्यगृहशालिनी पुनः प्रक्षालिता क्षणेनाधिनदि समानायिता । अनन्तरं नौकान्तरं स्वयमप्यारुह्य भगवन्त एनामधिरोहन्त्विति निगदिते देवेन सह सर्वे तामारुरुहुः । अथ स एव जलचरदस्युभयनिवारणाय स्वयमग्रेसरो भूत्वा मन्त्रेश्वरमुत्तीर्य पिच्छलदाग्रामपर्यन्तमागतवान् । निवृत्तिसमये भगवता जगन्नाथप्रसादमनोहराख्यमोदकाः प्रसादीकृताः । तानवाप्य हरिं वदेत्याविष्टो भूत्वा महाभागवतदशामापन्नः ।

(राजा विस्मयं नाटयति ।)

**सार्वभौमः**—एवमेवेश्वरस्य लीला । तथाहि—

अस्थानेऽपि प्रथयति कृपामीश्वरोऽसौ स्वतन्त्रः
　　स्थानेऽप्युच्चैर्जनयतितरां नूनमौदास्यमेव ।
रामो देवः स गुहमकरोदात्मनीयं सखायं
　　कृष्णः स्तोत्रैः प्रणमति विधौ हन्त मौनी बभूव ॥ १० ॥

(तत ।)

**पुरुषः**—तदाज्ञया भगवत्कीर्तनं कुर्वन्तस्ते नाविकास्तथा तरणिमवाहयन्त यथैकेनाह्ना पाणीयहाटीग्रामे समुत्तीर्णाः स्मः ।

**राजा**—तत्र को वर्तते ।

**सार्वभौमः**—राघवपण्डितः ।

**पुरुषः**—ततो यदभूत्तदाश्चर्यम् ।

**राजा**—कथमिव ।

**पुरुषः**—देव,

यावद्देवो न सुरसरितस्तीरसीमानमाप्त-
स्तावत्सर्वं जनमयमभूद्धन्त किं तद्ब्रवीमि ।
किं तत्रासीदहह धरणीधूलयो लोकरूपाः
किं तारा वा मनुजवपुषः पेतुरुर्व्यां नभस्तः ॥ ११ ॥

एवं गङ्गातटतः कष्टेनैव तद्धाटीमभ्याययौ देवः ।

**राजा**—ततस्ततः ।

**पुरुषः**—ततस्तां रजनीं तत्रैव गमयित्वा परेद्यवि नौवर्त्मनैव चलितवान् ।

अथो अविच्छिन्नशुभप्रवाहा निरन्तराया चपलोर्मिहस्ता ।
निरन्तरं विष्णुपदावतारा गङ्गेव दीर्घा जनपङ्क्तिरासीत् ॥ १२ ॥

ततः कुमारहट्टे श्रीवासपण्डितवाटीमभ्याययौ । तत्र च गङ्गातीराद्वाटीपर्यन्तगमने यत्रयत्र पदमर्पयतीशस्तत्र पादरजसां ग्रहणाय प्राणिपाणिपतनेन स पन्था हन्त गर्तमय एव बभूव । तत्रोत्तीर्ण एव भगवति जगदानन्दः शिवानन्दालये भगवदगोचर एव गतवान् । तत्र तेन चिरमेव स्थितमिति तदासक्त्या भगवानत्रानेतव्य इति रचनावैशिष्ट्यमपि कृतवान् ।

अथ—

प्राचीरस्योपरि विटपिनां सर्वशाखासु भूमौ
रथ्यां रथ्यामनु पथि पथि प्राणिषु प्राप्तवत्सु ।

उच्चैरुच्चैर्वद हरिमिति प्रौढघोषेषु देवो
रात्रीशेषे तरिमधि शिवानन्दनीतः प्रतस्थे ॥ १३ ॥

ततो जगदानन्देनोभयोः पार्श्वयोः कदलीस्तम्भपूर्णकुम्भमुकुलदीपावलीभिः सुरचनाविशेषेण शिवानन्दवाटीपर्यन्तमभिमण्डितं वर्त्मारूढः स्मितसुमधुरवदनो जगदानन्दकृतमिति मन्यमानो वामे वासुदेववाटीपथमपि तथाविधमालोक्य किमितोऽग्रे गन्तव्यं किमिति इति संदिहानो वासुदेवेनोचे। 'भगवन्, अग्रतः शिवानन्दवाटीमेवालंकुरु' इति। तथा कुर्वाणो जगदानन्देन धारितचरणाम्बुजस्तदीयभगवद्गृहं प्रविष्टः । अनन्तरं तच्चरणोदकं गृहपटलोपरि किंचिद्विकीर्य कियदन्तःपुरे परिजनेभ्यो जगदानन्देनैव दत्तम् । अनन्तरं मुहूर्तं स्थित्वा वासुदेववाटीमागत्य क्षणमवस्थाय पुनस्तरणिमारुह्य चलितवति भगवति चरणजलग्रहणार्थमाकण्ठमग्नानां जनानां यद्वैयग्र्यं जातं तदवलोक्य भगवतस्तथा करुणा जाता यथा सर्वैरेव चरणजलं प्राप्तमासीत् । ततस्तटवर्त्मनैव सर्वलोकाश्चलिता न केऽपि निववृतिरे ।

राजा—ततस्ततः ।

पुरुषः—ततोऽद्वैतवाटीमभ्येत्य हरिदासेनाभिवन्दितस्तथैव तरणिवर्त्मना नवद्वीपस्य परे कुलियानामग्रामे माधवदासवाट्यामुत्तीर्णवान् । नवद्वीपलोकानुग्रहहेतोः सप्तदिनानि तत्र स्थितवान् । तत्र च नवद्वीपात्पारगमने ।

य आतरः काकिणिकैकमात्र आसीत्प्रतिव्यक्ति स तु क्रमेण ।
वंहीयसीष्वप्यथ नौषु सोऽभूत्कार्षापणानामधिकाधिकोऽपि ॥ १४ ॥

अपि च—

दुर्गं बध्नाति वंशैर्दृढतरविपुलैर्माधवो यन्निशायां
तत्प्रातश्चूर्णभावं व्रजति जनघटाघट्टनेन क्रमेण ।
सप्ताहान्येवमेव व्यजनि जनिमतां दर्शनौत्कण्ठ्यभाजां—
संघट्टो यत्र देवः स्वयममरधुनीं स्नातुमीशोऽपि नेशः ॥ १५ ॥

एवं सप्तदिनानि तत्र स्थित्वा पुनस्तटवर्त्मनैव चलितवान् ।

स यत्र यत्रोपससार देवो वृत्तान्तः प्राक्तत एव लोकाः ।
ततस्ततो भूरपि भूरि भुग्ना विशिष्य विस्नापयते फणीन्द्रम् ॥ १६ ॥

श्रुतं च गौडेश्वरस्य राजधान्याः पारेगङ्गं चलतो भगवतः पश्चादुभयोः पार्श्वयोश्चलन्तीं लोकघटामालोक्य गौडेश्वरो गङ्गातटघटमानोपकारिकामारूढो विस्मितः किमिदमिति यदा पृष्टवांस्तदा केशववसुनाम्ना तदमात्येन कथितम्—'शूरत्राण, श्रीकृष्णचैतन्यो नाम कोऽपि महापुरुषः पुरुषोत्तमान्मथुरां प्रयाति तद्दिदृक्षया अमी लोकाः संचरन्ति' इति । ततस्तेनाप्युक्तम्—'अयमीश्वरो भवति यस्यैवंविधं लोकाकर्षणम्' इति । अतः परं च श्रुतम् । ततः कियद्दूरं गत्वा पुनः प्रत्यावृत्तो न तेन पथा मथुरां गमिष्यति अपि तु पुरुषोत्तममागत्य वनपथेनैवेति न जानीमः सत्यमसत्यं वदति ।

(नेपथ्ये ।)

सत्यं भोः सत्यम् ।

आगतश्च सहसा स एकको नीलशैलतिलकं विलोक्य च ।
लोकसंकुलभिया वनाध्वना निह्नुतः स मथुरां जगाम च ॥ १७ ॥

**राजा**—(सविस्मयम् ।) काशीमिश्रस्य स्वर इव श्रूयते तदाहूयताम् ।

(प्रविश्य सत्वरम् ।)

**काशीमिश्रः**—देव, अयमयमनाहूत एवागतः ।

**राजा**—कथय किं तत्वमिदम् ।

**काशीमिश्रः**—सत्यमेव लोकभिया ततोऽपि निवृत्तः । ततोऽपि केनाप्यविदित एव चलितवान् ।

**राजा**—सार्वभौम, अस्माकं तु समः पन्थाः विच्छेददुःखस्य तुल्यफलत्वात् । एकाकिनस्तस्य निर्वाहः कथं भवतु ।

**काशीमिश्रः**—भिक्षायोग्याः कियन्तो विप्राः प्रेपिताः सन्ति । भगवता तु तन्न ज्ञायते ।

**राजा**—साधु मिश्र, साधु किमप्युक्त्वा गतम् ।

**काशीमिश्रः**—आगतप्रायोऽहमिति ।

**राजा**—तर्कि दिनं भविष्यति ।

**भट्टाचार्यः**—जङ्घाजीविनः कियन्तो गच्छन्तु यथा भगवतो वार्तां प्रापयन्ति ।

**सार्वभौमः**—उचितमेवैतत्।

**राजा**—काशीमिश्रमहापात्रं चन्दनेश्वरं मदाज्ञया समादिश यथैवं करोति।

**काशीमिश्रः**—देव, परीक्षामहापात्रं निवेद्य मयैव तत्कारितमस्ति। कतिचिदागतप्राया एव।

(प्रविश्य।)

**दौवारिकः**—देव, महाप्रभोर्वार्ताहारिणो द्वारि वर्तन्ते।

**राजा**—प्रवेश्यन्ताम्।

**दौवारिकः**—(तथा करोति।)

(प्रविश्य।)

**वार्ताहारिणः**—जयति जयति देवः।

**राजा**—कथयत किं जानीथ।

**वार्ताहारिणः**—सर्वमेव जानीमः।

प्रत्यावृत्तः स मधुपुरतो दृष्टवृन्दावनश्रीः
कुञ्जे कुञ्जे तरणितनयाकूलतः क्लृप्तकेलिः।
गत्वा गोवर्धनगिरिवरे कानने कानने च
भ्रान्त्वा भ्रान्त्वा दिनकतिपयं वर्त्मनीशो व्यलोकि॥ १८॥

**राजा**—अरे, वृन्दावने किं किं कृतं भगवता तज्जानासि।

**वार्ताहारिणः**—

आविर्भावादवधि स निजानन्दवृन्दैककन्दो
यद्यप्युच्चैः प्रथयतितरां तद्विकारप्रकारान्।
वृन्दारण्योपगमसमये हन्त ते ते तरङ्गा
वृद्धिं प्रापुर्यदुपरि वचश्चित्तयोर्नो निवेशः॥ १९॥

क्वचन च यमुनावनान्तलक्ष्मीमवकलयन्ननुरक्तिमुक्तकण्ठम्।
विलपति परिरभ्य लोम्यबाहुः प्रतिलतिकं प्रतिशाखि सोऽखिलेशः॥२०॥

अपि च—

नैचिकीनिचयवीक्षणमोदादुन्मदः स्खलितवाग्गलदस्रः।
स्यन्दमानसुरसिन्धुरिवासीद्धातभग्न इव मेरुतटान्तः॥ २१॥

**राजा**—ततः ।

**वार्तोहारिणः**—ततस्तैः कथितम् ।

मदमुदितमयूरकण्ठकान्तद्युतिमभिवीक्ष्य कुतश्चिदप्यकस्मात् ।
स्खलति लुठति वेपते विरौति द्रवति विषीदति हन्त मूर्च्छतीशः॥२२॥

अपि च—

क्वापि वत्सकुलमुच्चलपुच्छं धावमानमनुवीक्ष्य वनान्तः ।
कण्टकावलिनि वर्त्मनि सद्यो वीक्षिताङ्गमभितः स्खलतीशः ॥ २३ ॥

**राजा**—ततः ।

**वार्तोहारिणः**—

कुञ्जसीमनि कदापि यदृच्छा मूर्च्छया निपतितस्य धरण्याम् ।
आलिहन्ति हरिणा मुखफेनानापिबन्ति शकुना नयनाम्भः ॥ २४ ॥

कदापि—

पतयालुरसावुपत्यकायामपि गोवर्धनभूधरस्य देवः ।
अनुरागसुधाब्धिमध्यमग्नो नहि भग्नोऽपि बहिर्व्यथां विवेद ॥ २५ ॥
अनुवनमनुकुञ्जवीक्षमाणे रुदति विभावनुरक्तिमुक्तकण्ठम् ।
रुरुदुरिव लताश्च शाखिनश्च द्विजमृगराजिरभाजि मूर्च्छयैव ॥ २६ ॥

अपि च—

विलपति करुणस्वरेण देवे जलधरधीरगभीरनिःस्वनेऽपि ।
चिरमनुविलपन्ति बाष्पकण्ठाः क्वचनच लास्यमपास्य नीलकण्ठाः ॥२७॥

एवमत्यनुरागवैकल्यादीश्वरत्वेनैव धार्यमाणदेहं तमालोकयद्भिः पुण्यवद्भिर्बलभद्रभट्टाचार्यादिभिरहो अनर्थोऽयमापतित इति चिन्तयद्भिर्बलादिव वृन्दावनान्निष्कासितो भगवानिति न चिरकालावस्थितिस्तत्र तस्येति ।

ततश्च ।

यः प्रागेव प्रियगुणगणैर्गाढबद्धोऽपि मुक्तो
गेहाध्यासाद्रस इव परो मूर्त एवाप्यमूर्तः ।
प्रेमालापैर्दृढतरपरिष्वङ्गरङ्गैः प्रयागे
तं श्रीरूपं सममनुपमे नानुजग्राह देवः ॥ २८ ॥

राजा—सार्वभौम, अतिप्रेष्ठवृन्दावनोऽपि कथमसौ स्वल्पमेव कालं तत्रावतस्थे ।

सार्वभौमः—जगन्नाथेन तद्विरहमसहमानेन समाकृष्ट इव ।

अपि च—

प्रियस्वरूपे दयितस्वरूपे प्रेमस्वरूपे सहजाभिरूपे ।
निजानुरूपे प्रभुरेकरूपे ततान रूपे स्वविलासरूपे ॥ २९ ॥

राजा—ततस्ततः ।

वार्ताहारिणः—ततश्च वाराणस्याम् ।

चन्द्रशेखर इति प्रथितस्य क्ष्मासुरस्य भवने भुवनेशः ।
प्राक्तनैः सुकृतराशिभिरस्य प्रत्यपद्यत तदा स यतीन्द्रः ॥ ३० ॥

राजा—ततस्ततः ।

वार्ताहारिणः—तदानीं तु ।

तमेत्य पश्येत्यनुरागपूर्वं विश्वेश्वरो विश्वमिह न्ययुङ्क्त ।
कुतोऽन्यथा तावति तुल्यकाले तुल्यक्रियः सर्वजनो बभूव ॥ ३१ ॥

अपि च—

ब्रह्मचारिगृहिभिक्षुवनस्था याज्ञिका व्रतपराश्च तमीयुः ।
मत्सरैः कतिपयैर्यतिमुख्यैरेव तत्र न गतं न स दृष्टः ॥ ३२ ॥

राजा—सार्वभौम, किमिति तथाविधानामपि तादृशं मात्सर्यम् ।

सार्वभौमः—महाराज, यावन्मनोजयो न भवति तावदेव भगवती मत्सरलता न किंचिदपि मुञ्चति ।

राजा—ततस्ततः ।

वार्ताहारिणः—ततश्च ।

गौडेन्द्रस्य सभाविभूषणमणिस्त्यक्त्वा य ऋद्धां श्रियं
　　रूपस्याग्रज एष एव तरुणीं वैराग्यलक्ष्मीं दधे ।
अन्तर्भक्तिरसेन पूर्णहृदयो बाह्येऽवधूताकृतिः
　　शैवालैः पिहितं महासर इव प्रीतिप्रदस्तद्विदाम् ॥ ३३ ॥

राजा—ततस्ततः ।

**वार्ताहारिणः**—

तं सनातनमपागतमक्ष्णोर्दृष्टिमात्रमतिमात्रदयार्द्रः।
आलिलिङ्ग परिघायतदोर्भ्यां सानुकम्पमथ चम्पकगौरः॥ ३४॥

**राजा**—कथमिव तस्य दर्शनं जातम्।

**वार्ताहारिणः**—श्रुतमिदं तन्मुखादेव।

**राजा**—कथ्यताम्।

**वार्ताहारिणः**—

औत्कण्ठ्यैकपुरःसराः प्रथमतो ये यान्ति नाथाग्रतो
निष्क्रामन्ति न ईशनामनिरताः सास्राः सरोमोद्गमाः।
यातायातवतां क्रमं विगणयंस्तत्पादधूलीर्जुप-
न्सर्वज्ञेन बहिः स्थितो भगवता कैरप्ययं नायितः॥ ३५॥

**राजा**—ततस्ततः।

**वार्ताहारिणः**—ततश्च न मे प्रियश्चतुर्वेदीत्यादि पठित्वा सत्वरमवतीर्यायं दोर्भ्यां परिरब्ध इति।

**राजा**—ततस्ततः।

**वार्ताहारिणः**—ततस्तत्रैव कापि किंवदन्ती श्रुता।

**राजा**—कासौ।

**वार्ताहारिणः**—

पुरुषोत्तममेत्य तैः पुनर्गमयित्वा कतिचिद्दिनान्यपि।
रमितैः प्रभुनैव तद्गिरोऽप्यथ वृन्दावनमेव गंस्यते॥ ३६॥

**राजा**—किं देवेन सहैव वा किं पश्चात्।

**वार्ताहारिणः**—पश्चादेव भविष्यति। यतो वाराणसीत एकाकिनैव भगवता चलितमिति दृष्टम्। अन्यदपि तत्र किमपि श्रुतम्।

**सार्वभौमः**—किं तत्।

**वार्ताहारिणः**—

कालेन वृन्दावनकेलिवार्ता लुप्तेति तां ख्यापयितुं विशिष्य।
कृपामृतेनाभिषिषेच देवस्तत्रैव रूपं च सनातनं च॥ ३७॥

**रामानन्दः**—समुचितमेवैतत् ।

( नेपथ्ये दूरतो जयजयेत्युच्चैः कोलाहलः । )

**सर्वे**—( आकर्ण्य । ) अये, समागत इव भगवाञ्श्रीकृष्णचैतन्यः । यदयमपूर्व एव कोलाहलः श्रूयते ।

( पुनर्नेपथ्ये । )

अद्यास्माकं सफलमभवज्जन्म नेत्रे कृतार्थे
सर्वस्तापः सपदि विरतो निर्वृतिं प्राप चेतः ।
किंवा ब्रूमो बहुलमपरं पश्य जन्मान्तरं नो
वृन्दारण्यात्पुनरुपगतो नीलशैलं यतीन्द्रः ॥ ३८ ॥

**राजा**—किमपरं विलम्बध्वे तत्रैव गच्छाम । ( इति सर्वे निष्क्रान्ताः । )

( ततः प्रविशति श्रीकृष्णचैतन्यस्तत्कालोपनतौ परमानन्दपुरीस्वरूपौ च, परितो दिदृक्षोपनताः काशीमिश्रादयश्च । )

**श्रीकृष्णचैतन्यः**—( पुरीश्वरं प्रति । ) स्वामिन्,

तीर्थद्वयं यदपि तुल्यमिदं महान्तः
काश्यादयोऽपि पुरतः कलुषापहारि ।
आनन्ददाः किल तथापि महान्त एव
यद्युष्मदीक्षणसुखं हि सुखाय तेन ॥ ३९ ॥

अतो हि त्वादृशां सङ्गस्तीर्थान्तरसेवनादपि परमो रम्य इति शीघ्रमेवायातम् ।

**पुरीश्वरः**—अस्ति तादृशं नो भागधेयम् । यदतिकालं भगवद्विरहदवदहनेन न दग्धाः स्मः ।

( सत्वरमुपसृत्य सार्वभौमरामानन्दौ दण्डवत्प्रणमतः श्रीचैतन्यस्तावालिङ्गति । )

**काशीमिश्रः**—स्वामिन्, जगन्नाथवल्लभावकाशानन्तरं श्रीजगन्नाथः शिशयिषुरपि भगवन्तं प्रतीक्षते तत्त्वरितमेव तमवलोकयन्तु ।

**श्रीकृष्णचैतन्यः**—एहि पुरीश्वर, एहि । ( इति सर्वैः सह निष्क्रान्तः । )

( इति निष्क्रान्ताः सर्वे । )

इति मथुरागमनो नाम नवमोऽङ्कः ।

---

दशमोऽङ्कः।

( ततः प्रविशति कश्चिद्वैदेशिकः। )

वैदेशिकः—श्रुतं मया प्रत्यब्दमेव गुण्डिचासमये अद्वैताचार्यादयः सर्वे श्रीकृष्णचैतन्यदर्शनार्थं गच्छन्ति। तेषामभिभावकतया शिवानन्दनामा कश्चित्तस्यैव भगवतः पार्षदो वर्त्मनः कण्टकायमानानां घट्टपालानां घट्टदेयादिनिघ्नविघ्ननिवारक आचाण्डालमपि प्रतिपाल्य नयति। तदहमपि तमनुसंदधामि यथा तस्य सङ्ग एव गम्यते। ( इति कतिचित्पदानि गत्वा। ) अये, पुरतोऽयं समीचीनो जन आलोक्यते तदयमेव प्रष्टव्यः। ( इत्युपसर्पति। )

( ततः प्रविशत्यद्वैतसेवकः कश्चिद्गन्धर्वनामा। )

गन्धर्वः—अये, नियुक्तोऽस्मि स्वामिनाऽद्वैतेन। यथा

आयातः पुरुषोत्तमस्य गमने कालः शुभोऽयं वयं
यामः सत्वरमेव संप्रति शिवानन्दस्त्वया भण्यताम्।
प्रस्थानस्य दिनं विधाय लिखतु कैकत्र सर्वे वयं
गच्छन्तः सहसा भवेम मिलिताः पश्चात्पुरोभावतः॥ १॥

तदहमुपैमि ( इति परिक्रामति। )

वैदेशिकः—( उपसृत्य। ) भ्रातः, क्व यासि।

गन्धर्वनामा—( आयात इत्यादि पठति। )

वैदेशिकः—( सहर्षमात्मगतम्। ) यच्छ्रुतं मया तदवितथमेव। तथापि पृच्छामि। ( प्रकाशम्। ) भ्रातः, अपरिचितं प्रतिपाल्य स किं नयति।

गन्धर्वनामा—भ्रातः, कुक्कुरोऽपि तेन प्रतिपाल्य नीतोऽस्ति किं पुनर्मानुषः।

वैदेशिकः—भ्रातः, कथय कीदृशं तत्।

गन्धर्वनामा—भगवतो मथुरागमनात्पूर्वमेकस्मिन्नब्दे सर्वेषु परःसहस्रेषु लोकेषु चलितवत्सु कश्चित्कुक्कुरोऽपि रोपितयादृच्छिकेच्छः शिवानन्दनिकटे चलितः, शिवानन्दोऽपि सङ्गे सङ्गे चलन्तमालोक्य सश्रद्धमेवानुसंधत्ते, प्रतिवसति समयेऽनुच्छिष्टमेवान्नं तस्मै प्रयच्छति, यत्र नद्या-

दिपारं तत्र तदर्थं पृथग्यथेष्टमातरं दत्वा नावमारोहयति। सोऽपि तदनुपदमेव प्रत्यहं चलति। एवं वर्त्मनस्त्रिभागपर्यन्तं गते कुत्रापि दिवसे तद्भक्ष्यमन्नं विस्मृत्य भृत्येन न दत्तम्। पश्चात्तमनवलोक्य अहो, अद्य शुने भक्ष्यं न दत्तमित्यनुतपता स्वयमितस्ततो नामग्राहमाह्वयतापि न तस्य दर्शनं लब्धम्। तदवधि पुरुषोत्तमपर्यन्तमेव न दृष्टः। पश्चान्मनः कष्टतरमेवास्य जातम्। तदनु दैवगत्या पुरुषोत्तमे समुत्तीर्णे तमेव श्वानं जलधितीरोपकण्ठमेकाकिन उपविष्टस्य भगवतश्चैतन्यस्य समीपे दृष्ट्वा शिवानन्दः सापराधमिव प्रणम्य दूरे स्थितोऽवलोकयति। भगवान् जगन्नाथप्रसादनारिकेलशस्यं खण्डशः प्रक्षिप्य ददाति, कृष्णं ब्रूहीति च वदति, स च एकैकं भक्षयति कृष्ण कृष्ण कृष्णेत्यपि वदति। तदपूर्वमालोक्य शिवानन्दः पुनस्तं प्रणम्य स्वापराधं क्षमापयति स्म। पुनस्तदवधि सोऽपरं(रेण) न केनाप्यदृश्यत। मन्ये तेनैव शरीरेण रूपान्तरं लब्ध्वा लोकान्तरं प्राप्तः।

**वैदेशिकः**—भ्रातः, अद्य मे शुभो दिवसः; यदियं श्रीकृष्णचैतन्यकथा कर्णातिथिर्जाता। यो देवः कुक्कुरमपि भगवन्नाम ग्राहयामास तस्य नृलोकं प्रति यत्कृपा भविष्यति तत्किमुत। तद्भ्रातः, पथि गच्छतामेषां वर्त्मकण्टकभूता घट्टपालाः कीदृशं व्यवहरन्ति।

**गन्धर्वनामा**—भ्रातः, श्रूयताम्।

प्रभावादेव देवस्य प्रत्यब्दमनुगच्छताम्।
यातायातसुखं भूरि सर्वेषामेव निश्चितम्॥ २॥

तथा कचनाब्दे कष्टं च भवति।

**वैदेशिकः**—कीदृशं तत्।

**गन्धर्वनामा**—कचनाब्दे सर्वेषु मदीश्वरप्रभृतिषु परःसहस्रेषु जनेषु चलितेषु सकलजनाभिभावकेन शिवानन्देनापि सपरिकरेण चलितम्। स एव प्रतिघट्टं मदीश्वरादिगणवर्जं यावन्तो गच्छन्ति तावतामेव घट्टदेयस्य[1] प्रतिभवीभूत्वा स्वयमेव जनं प्रति यत्र यद्गच्छति तस्य निर्णयानुरूपं परि-

१ नौकाशुल्कम्.

च्छेद्यं दत्त्वा याति, लोकाः सुखं गच्छन्ति, एवं गच्छत्सु सत्सु रेमुणा-जनपदे घट्टपालनामधिकारी कश्चिद्गजपतेरमात्यो गजपतिमहाराजे दक्षिणां दिशमीयुषि स्वतन्त्रः सन् तत्रैवागतः । तेन दुरात्मना लङ्घितमर्यादेन करं वर्धयित्वा प्रत्येकं जनान्विगणय्य गतानामब्दानामपि तत्क्रमेणैव लेखयित्वा पुञ्जीभूतं शुल्कमादातुं शिवानन्दः काष्ठनिगडेन बद्धः, तद्बन्धने सर्व एव मदीश्वरादयः परमोद्विग्ना अकृताह्निका एव तस्थुः ।

**वैदेशिकः**—ततः ।

**गन्धर्वनामा**—ततो रात्रेर्यामद्वये गते तेनैव पामरेण शिवानन्दो यष्टिधारकेण केनचिदनुचरेणाजुहुवे । स तदानीं परमोद्विग्न आसीत्, कदाचिदयं प्रहरतीति चैतन्यचरणं स्मृत्वा वल्लभेन सह तत्पुरत ईयिवान् । अनन्तरं सुप्तोत्थितं दीपिकाधारिभिर्बहुभिः परिवृतं वीक्ष्य विभयाञ्चकार । अनन्तरममात्येन पृष्टः 'अये, त्वं सपरिकरः समायातोऽसि' अनेनोक्तम् 'अथ किम्' । पुनः स ऊचे 'त्वं कस्य लोकः' । अनेनोक्तम् 'श्रीकृष्णचैतन्यस्य' । पुनस्तेनोक्तम् 'त्वं चैतन्यस्य, अहं जगन्नाथस्य । जगन्नाथचैतन्ययोः को महान्' । अनेनोक्तम् 'मम तु कृष्णचैतन्य एव महान्' । इत्याकर्ण्य प्रीतिसुमुखो भूत्वा सापराध इव अये, मया स्वप्नो दृष्टः । श्रीकृष्णचैतन्यो मामुक्तवान् 'मदीयो लोकस्त्वया बद्धोऽतित्वरितमेव मुच्यताम्' इति । तदयमपराधो मे क्षन्तव्यः । तव किंचिदपि दातव्यं नास्ति सुखेन प्रातरुत्थाय सर्वैः सह गम्यतामित्युक्त्वा दीपिकाधारिणौ द्वावुक्तवान् अस्य परिकरो यत्र वर्तते तत्रायं स्थाप्यतामिति । तथा याते तदा सर्वेऽस्मदीश्वरादय आह्निकमारब्धवन्तः ।

**वैदेशिकः**—अहो, विचित्रैव चैतन्यदेवस्य करुणा, प्रभावः, ऐश्वर्यं च ।

**गन्धर्वनामा**—त्वं कुतोऽसि ।

**वैदेशिकः**—अहमुत्तरराढातः ।

**गन्धर्वनामा**—कथमेकाकी ।

**वैदेशिकः**—नरहरिदासादिभिरहं प्रेषितः ।

गन्धर्वनामा—किमर्थम्।

वैदेशिकः—कदासौ पुरुषोत्तमं गन्तेति ज्ञातुम्।

गन्धर्वनामा—तदिहैव मदीश्वरालयनिकटे तिष्ठ; यावदहं ज्ञात्वा समागच्छामि। अन्ये केचिद्दशजना भवानिव तत्र चलन्तो मदीश्वरेणैव स्थापिताः; मयैव सह यूयं यास्यथ इति।

वैदेशिकः—कथं तेषु भवदीश्वरस्य तादृशानुग्रहो जातः।

गन्धर्वनामा—तेष्वेकः परममधुरो लोकलोचनरसायनमिव नवीनवया रमणीयरूपः सहजावतीर्णश्रीकृष्णप्रेमरसबाह्यान्तरसरसः श्रीनाथनामा द्विजकुलचन्द्रः, तमतिलोभनीयं दृष्ट्वा मदीश्वरः परमं पिप्रिये। उक्तं च मया रहसि श्रीकृष्णचैतन्यं 'भवान् दर्शयिष्यते मान्यसङ्गे गन्तव्यम्' इति। गृहतस्तदनुरोधेन मासमारभ्य दशानामेव योगक्षेमं करोति।

वैदेशिकः—भवत्वहमिहैव स्थित्वा भवन्तं प्रतीक्षे।

गन्धर्वनामा—अहमपि शिवानन्दमनुसर्पामि। (इत्युभौ निष्क्रान्तौ।)

विष्कम्भकः।

(ततः प्रविशति शिवानन्दस्तत्सार्थे यियासवः कियन्तोऽन्ये च।)

शिवानन्दः—(तत्रैकं प्रति।) अये, त्वं कुतोऽसि।

सः—महात्मन्, गोवर्धनदासेनाहं त्वत्समीपं प्रेषितः।

शिवानन्दः—आं ज्ञातम्। रघुनाथदासोद्देशार्थं गमिष्यति भवान्।

सः—अथ किम्।

शिवानन्दः—किं तदुद्देशेन।

अन्यः—महाशय, स त्वया परिचीयते।

शिवानन्दः—श्रूयताम्।

आचार्यो रघुनन्दनः समधुरः श्रीवासुदेवप्रिय-
स्तच्छिष्यो रघुनाथ इत्यधिगुणः प्राणाधिको मादृशाम्।
श्रीचैतन्यकृपातिरेकसततस्निग्धः स्वरूपानुगो
वैराग्यस्य निधिर्न कस्य विदितो नीलाचले तिष्ठताम्॥ ३॥

अपि च—

यः सर्वलोकैकमनोऽभिरुच्या सौभाग्यभूः काचिदकृष्टपच्या ।
यत्रायमारोपणतुल्यकालं तत्प्रेमशाखी फलवानतुल्यम् ॥ ४ ॥

तथप्यागच्छ मयैव प्रतिपाल्य नेतव्योऽसि; यावदद्वैतदेवाज्ञा न लभ्यते तावदेव विलम्बः । (इति चिन्तयति ।)

(ततः प्रविशति गन्धर्वः ।)

**गन्धर्वनामा**—अये, अयमयं शिवानन्दः । तद्यावदुपसर्पामि । (इत्युपसर्पति ।)

**शिवानन्दः**—(पुरोऽवलोक्य ।) अये, पुरतोऽयमाचार्यगोस्वामिनो भृत्य इव लक्ष्यते । तद्भद्रं जातम् । यदर्थं चिन्त्यते तदेव संपन्नम् ।

(उपसृत्य ।)

**गन्धर्वनामा**—महाशय, आज्ञापयति भगवानद्वैतगोस्वामी भवन्तम् ।

**शिवानन्दः**—अवहितोऽस्मि । कथ्यताम् ।

**गन्धर्वनामा**—आयातः । (इत्यादि पुनः पठति ।)

**शिवानन्दः**—अहमपि तदाज्ञां प्रतीक्षमाण एवास्मि ।

**गन्धर्वनामा**—विशेषः कश्चिदस्ति ।

**शिवानन्दः**—कोऽसौ ।

**गन्धर्वनामा**—अस्मिन्नब्दे स्नानयात्रा च द्रष्टव्येति ।

**शिवानन्दः**—अभीष्टमेवैतदखिलस्य । तत्साधय भगवन्तो ज्ञाप्यन्ताम्, अयमहं दिनानि निर्धार्य चरणान्तिकं गच्छन्नस्मि । तावदहं श्रीवासपण्डितप्रभृतिभिर्निर्णेतुं तत्र गच्छामि, त्वमपि साधय । (इति निष्क्रान्ताः ।)

(ततः प्रविशत्यपटीक्षेपेण सार्वभौमः ।)

**सार्वभौमः**—यद्यपि भगवतोऽस्मिन्नर्थे नानुमतिर्जाता, तथापि हठादेवाहं वाराणसीं गत्वा भगवन्मतं ग्राहयामीति हठादेव तत्र गच्छन्नस्मि । न जाने किं भवति । यद्यपि भगवत इच्छाधीनैव करुणा, तथापि करुणापरतन्त्रत्वं तस्येति कदाचित् करुणापि स्वतन्त्रा भवतीति करुणाया एव साहाय्येन यद्भवति तदेव भविष्यति । (इति परिक्रामन् पुरोऽवलोक्य ।) अहो,

यदमी एकत्र समुपचिता अनेकशो नानादेशीया जनाः परतो दृश्यन्ते तदमी तैर्थिका एव । (पुनर्निभाल्य ।) अये, सर्व एव गौडीयाः । (पुनर्निरूप्य।) अयमयमद्वैताचार्यः, अयमयं नित्यानन्दावधूतः, अयमयं श्रीवासः, अयमयं हरिदासः, अयं गदाधरदासः, इमे गोविन्दघोषादयः, एष मकरध्वजः, एष काशीनाथः, एते नरहरिप्रमुखाः, एते कुलीनग्रामीणा रामानन्दादयः, एते नित्यानन्दपार्षदा गौरीदासादयः । किं बहुना । सर्वे चैतन्यपार्षदा एव समागच्छन्ति । तद्भद्रमेव जातमद्यात्रैव स्थित्वा प्रत्येकमेते संभाषणीयाः । (इत्युपसर्पति ।)

(ततः प्रविशन्ति भगवद्दर्शनार्थं प्रस्थिता अद्वैतादयः ।)

**अद्वैतः**—अये, पुरतः सार्वभौम इव दृश्यते कोऽर्थः ।

**सार्वभौमः**—(उपसृत्याद्वैतं प्रणमति, एवमन्यानपि । दूरे हरिदासं विलोक्य ।) कुलजात्यनपेक्षाय हरिदासाय ते नमः ।

**हरिदासः**—(दूरेऽपसर्पन् ससाध्वसं प्रणमति ।)

**अद्वैतः**—सार्वभौम, भवद्भिः कथं श्रीकृष्णचैतन्यपदारविन्दस्य विच्छेद ऊरीकृतः ।

**सार्वभौमः**—एवमेव । (इति सर्वे कथयन्ति ।)

**अद्वैतः**—हंहो, अद्यात्रैव सर्वे विश्रामन्तु; भट्टाचार्येण सह गोष्ठी कर्तव्या ।

**सर्वे**—यथा रुचितं भवद्भ्यः । (इति यथायथं वासं कुर्वन्ति ।)

**श्रीकान्तः**—(शिवानन्दं प्रति ।) भो मातुलमहाशय, अहमग्रे यामि यदि वोऽनुमतिर्भवति ।

**शिवानन्दः**—यथासुखं साधय ।

**श्रीकान्तः**—(प्रणम्य निष्कामति ।)

**अद्वैतः**—एहि भट्टाचार्य, एहि । वासं कृत्वा समये सर्वं श्रोतव्यम् । (इति निष्क्रान्तः ।)

(ततः प्रविशतः स्वरूपगोविन्दौ ।)

**स्वरूपः**—श्रुतं गौडतः सर्वेऽद्वैतादयः समागच्छन्ति ।

गोविन्दः—संप्रति तान्मध्यवर्त्मनि परित्यज्य श्रीकान्तोऽधुनैव समायातः।

स्वरूपः—क्वासौ।

गोविन्दः—महाप्रभुणा सह संकथयन्नास्ते।

स्वरूपः—तदावामपि शृणुवः। (इत्युपसर्पतः।)

(ततः प्रविशति सुखोपविष्टः पुरीश्वरेण सह स महाप्रभुः, कियद्दूरे श्रीकान्तश्च।)

महाप्रभुः—श्रीकान्त, कथय के के समायान्ति।

श्रीकान्तः—प्रभो, सर्व एव त्वदीयाः। अस्मिन्नब्दे न कोऽपि तत्र वर्तते। अदृष्टश्रीचरणाश्च केचित्।

स्वरूपः—(उपसृत्य।) जयति जयति महाप्रभुः।

महाप्रभुः—एह्येहि स्वरूप। (इति स्वसमीपमुपवेशयति।)

श्रीकान्तः—(स्वरूपं प्रणमति।)

महाप्रभुः—श्रीकान्त, ततस्ततः के तेऽदृष्टपूर्वाः।

श्रीकान्तः—प्रभो, अद्वैताचार्यस्य पुत्रा विष्णुदासगोपालदासादयः। अन्याश्चाद्वैतसङ्गे कश्चिदखिलजनप्रियः श्रीनाथनामा।

महाप्रभुः—कथमसौ शिवानन्दसङ्गं त्यक्त्वा तत्सङ्गे आयाति।

श्रीकान्तः—तेनोक्तं मया निभृते भवान् महाप्रभोः समीपे नीत्वा तद्विशेषानुग्रहो ग्राहयितव्य इति तदाश्वासेन।

महाप्रभुः—(विहस्य स्वरूपं प्रति।) श्रूयताम्।

अद्वैतोपायनमिदमिति स्वादुभावीति कार्ये
प्रेमैतस्मिन्किमपि भवताप्यत्र मैत्रीस्वरूपे।
त्वं चास्मिञ्शंकर सुमधुरं भावमुद्भावयेथाः
सर्वेषां हि प्रकृतिमधुरो हन्त तुल्येन योगः॥ ५॥

उभौ—यथाज्ञापयति देवः।

महाप्रभुः—पुनः के।

श्रीकान्तः—वासुदेवापत्ये मातुलस्य पुत्रौ।

महाप्रभुः—तौ दृष्टपूर्वौ।

श्रीकान्तः—कनीयांस्तु यः सोऽदृष्टश्रीचरणः।

महाप्रभुः—(पुरीश्वरं प्रति) स्वामिन्, तव दासः।

श्रीकान्तः—प्रभो, एवमेव।

महाप्रभुः—ततस्ततः।

श्रीकान्तः—रामानन्दवसोरपत्यम्, एवमन्येऽपि।

महाप्रभुः—स्वामिन् पुरीश्वर, हंहो स्वरूप, अस्मिन्नब्दे एतेषां कृते खल्वमी मद्दर्शनं लप्स्यन्ते।

उभौ—(स्वगतम्।) अहो, कः संदर्भोऽस्य वचसः। भवतु। स्वयमेव स्फुटीष्यति।

महाप्रभुः—अस्मिन्नब्दे भूपालदर्शनमाचार्यस्य भविष्यति।

श्रीकान्तः—देव, मया दूरादेवागतं तेन तदनभिज्ञोऽस्मि।

पुरीस्वरूपौ—(स्वगतम्।) अहो, अवगतं गतेऽब्दे अद्वैताचार्येण यद्भूपालः संभाषितस्तेन स एवाक्रोशोऽद्यापि भगवतो मनसि जागर्ति।

महाप्रभुः—पुरीश्वरवासुदेवचरितमेव मे रोचते।

पुरीस्वरूपौ—भाग्यवानेवासौ यस्य परोक्षेऽपि भगवन्तः प्रशंसन्ति।

(नेपथ्ये कलकलः।)

पुरीस्वरूपौ—(आकर्ण्य।) देव, उपसन्ना एवामी। यदयं कोलाहलः श्रूयते।

महाप्रभुः—गोविन्द, भगवत्प्रसादमालां गृहीत्वोपसर्पतु भवान्।

गोविन्दः—यथाज्ञापयसि। (इति निष्क्रान्तः।)

(प्रविश्य।)

वाणीनाथः—(प्रणम्याञ्जलिं बद्ध्वा।) देव, महाप्रसादान्नादीनि भगवतः श्रीजगन्नाथस्य।

महाप्रभुः—वाणीनाथ, साधु समयज्ञोऽसि। यदधुनाद्वैतादीनामागमनमाकलय्यैवं कृतवान्। यावद्गोविन्द एति तावत् क्वापि समावेशय।

वाणीनाथः—(तथा करोति।)

(प्रविश्य।)

**काशीमिश्रः**—भगवन्, श्वः खलु भगवतः स्नानमहोत्सवः।

**महाप्रभुः**—आं जानामि। किंतु भो मिश्र, यथास्मिन्नब्दे आपामरमपि स्नानमहोत्सवं मदीयगौडीयाः सुखेन पश्यन्ति तथा कर्तव्यम्।

**काशीमिश्रः**—स्वामिन्, भूपतिनादिष्टोऽस्मि 'अस्मिन्नब्दे मदीयावरोधादयः केऽपि देवस्नानं न द्रक्ष्यन्ति'। ते यत्र चक्रवेष्टोपरि स्थित्वा पूर्वं देवस्नानं पश्यन्ति तत्रैव सर्वे गौडीया आरोहणीयाः।

**महाप्रभुः**—स्वस्ति तस्मै।

(पुनर्नेपथ्ये संकीर्तनध्वनिः।)

**पुरीस्वरूपौ**—स्वामिन्, चारगणेशं प्राप्ता अमी।

**महाप्रभुः**—स्वरूप, त्वमग्रतोऽभिगच्छ पश्चादहमपि।

**स्वरूपः**—यथाज्ञापयसि। (इति निष्क्रान्तः।)

**पुरी**—(स्वगतम्।)

आक्षेपोऽपि महानसौ प्रकटितः संप्रत्ययं चादरो
भूयानेव विकाश्यते भगवताद्वैतं प्रति स्निह्यता।
सौहार्दस्य स एवमेव महिमा देव स्वभावात्सतो-
र्बन्धूनां गुणदोषयोरपि गुणे दृष्टिर्न दोषग्रहः॥ ६॥

**महाप्रभुः**—पुरीश्वर, उत्तिष्ठ। वयमप्यभिगच्छामः।

**पुरीश्वरः**—उत्तिष्ठन्तु गोस्वामिनः। (इति पुरादभ्युपगच्छन्ति।)

(ततः प्रविशति भगवत्प्रसादमालालम्भनलब्धद्विगुणहर्षो नृत्यानन्दनिर्भरोऽद्वैतः परितः कीर्तयन्तश्चामितः शिवानन्दादयश्च। अद्वैतो दूरादागच्छन्तं महाप्रभुमालोक्य नृत्यन्नेव भूमौ पतति।)

**शिवानन्दः**—(स्वतनयं प्रति सर्वाङ्गश्रावयित्वा।) पश्य पश्य अयमयम्।

विद्युद्दामद्युतिरतिशयोत्कण्ठकण्ठीरवेन्द्र-
क्रीडागामी कनकपरिघद्राघिमोद्दामबाहुः।
सिंहग्रीवो नवदिनकरद्योतविद्योतिवासाः
श्रीगौराङ्गः स्फुरति पुरतो वन्द्यतां वन्द्यतां भोः॥ ७॥

(इति सर्वे भूमौ प्रणम्य पुनर्यावदुत्तिष्ठन्ति तावदेवाद्वैतगोष्ठीप्रविष्टं भगवन्तं पुनर्दिग्भिरन्वेषयन्ति ।)

**शिवानन्दः**—(निर्वर्ण्य ।)

अद्वैतचैतन्यदृढोपगूहने न कोऽपि किंचित्परिचेतुमीश्वरः ।
चैतन्यमद्वैतमितीक्षते जनोऽद्वैतं च चैतन्यमितीक्षते क्षणम् ॥ ८ ॥

पश्यत भोः—

अद्वैतमग्रे विनिधाय देवो दिदृक्षया तस्य गतः पुरस्तात् ।
प्रवेशयत्येव निजाश्रमान्तर्विलम्ब्य सर्वे क्रमतो विशन्तु ॥ ९ ॥

(इति सर्वानिवार्य क्रमात्प्रवेशयन्ति । महाप्रभुरुपविश्य प्रत्येकमद्वैतादीन् यथायथमालिङ्गनसंभाषणावलोकनादिभिरानन्दयित्वा भगवत्प्रसादान्नं श्रीहस्तेन मुष्टिप्रपूरं ददाति । अद्वैतादयो यथाक्रमं गृह्णन्ति ।)

**भगवान्**—भो भो, अद्य नापरं भोक्तव्यं चक्रवेष्टोपरि सर्वैरेव रजनीमुखे समारोढव्यम्; यथा सुखेन स्नानमहोत्सवो दृश्यते ।

**सर्वे**—यथाज्ञापयन्ति । (इति निष्क्रान्ताः ।)

**स्वरूपः**—भगवन्, स्वयमपि यथासमयाह्निकं कर्तुमर्हन्ति ।

**भगवान्**—यथा रुचितं वः । (इति पुरीस्वामिना सह निष्क्रान्तः ।)

**स्वरूपः**—काशीमिश्र, भूपालो राजधानीतः सांप्रतमागन्ता किं गुण्डिचानिकटे ।

(नेपथ्ये ।)

आयातः ।

**काशीमिश्रः**—गोस्वामिन्, यथायं प्रस्तौति तथागत इव लक्ष्यते ।

**स्वरूपः**—तर्हि स्नानदर्शनं सुखेन भावी ।

**काशीमिश्रः**—तत्त्वं जानामि । (इति निष्क्रान्तः ।)

**स्वरूपः**—गोविन्द, एहि भगवन्तमनुगच्छाव । (इति निष्क्रान्तः ।)

(ततः प्रविशति वडभीस्थो राजा पुरोहितश्च ।)

**राजा**—पुरोहित, अस्मिन्नब्दे मया इह स्थितेनैव स्नानं द्रष्टव्यम् । अन्यथा भगवतो गौराङ्गस्य संकोचो भविष्यति ।

**पुरोहितः**—उचितमेवैतत् ।

**राजा**—कः कोऽत्र भोः, आहूयतां काशीमिश्रः ।

(प्रविश्य)

**काशीमिश्रः**—अयमस्मि । आज्ञापयतु देवः ।

**राजा**—मिश्र,

ये गौडीया इह भगवतः पार्षदास्तज्जना वा
तेषां ये वा तदनुगमिनो हन्त ये वा सभृत्याः ।
सर्वेऽस्मत्स्त्रीतनयसुहृदो यत्र यत्रोपविश्य
स्नानं पश्यन्त्यतिसुखममी सन्तु तत्रोपविष्टाः ॥ १० ॥

**काशीमिश्रः**—महाराज, भगवदाज्ञया पूर्वमेव तथैव संपादितमस्ति ।

**राजा**—सुविहितम् ।

(प्रविश्य कश्चित्पदातिकः ।)

**कञ्चुकी**—देव, देव्यो विज्ञापयन्ति अस्माभिर्देवस्नानं द्रष्टुमागतं तन्नाभूदिति ।

**राजा**—कथं नो भविष्यति । इहैव स्थित्वा ताभिरपि द्रष्टव्यम् । पश्यायं तत्प्रकारोऽस्ति कल्पितः ।

**काशीमिश्रः**—देव, पश्य पश्य ।

स्नानालयस्याभिमुखं सुसौधमट्टं गताश्चन्द्रकराभिगुप्तम् ।
देवा इवैते विलसन्ति भक्ताः सर्वे नभोमध्य इवोपविष्टाः ॥ ११ ॥

**राजा**—साधु प्रवेशिता इमे श्रीकृष्णचैतन्यपार्षदाः । तदधुना साधयतु भवान् । जगन्नाथ, विजयसमयो नेदीयानिव जातस्तदुचितकर्मणे नापरं विलम्बस्व ।

**काशीमिश्रः**—यथाज्ञापयति । (इति निष्क्रान्तः ।)

(ततः प्रविशन्ति महिष्यः ।)

**महिष्यः**—जयदु जयदु महाराओ । (क)

---

(क) जयतु जयतु महाराजः ।

**राजा**—(देवीं प्रति) एहि देवि, एहि । कृतार्थीकुरु जनुः । (इति सश्लाघमुपवेश्य ।) देवि, पश्य पश्य ।

इमे चैतन्यदेवस्य पार्षदा विश्वपावनाः ।
कियतैव विलम्बेन तमप्यालोकयिष्यसि ॥ १२ ॥

तदेतान्प्रणम । (देवी प्रणमति ।)

**राजा**—पश्य पश्य महदिदमाश्चर्यम् ।

महाज्यैष्ठीयोगे भवति भगवद्देवकुलगा
पताकोदश्चन्तीत्यतिसुविदितोऽयं जनरवः ।
इति श्रद्धोन्नेत्रा युगपदभिपश्यन्ति त इमां
लिहन्तीं तज्जिह्वामिव तुहिनभानोरिव वपुः ॥ १३ ॥

**महिषी**—देअ, सच्चंज्जेव एसा जणस्सुई । (क)

**राजा**—पश्य स्वयमपि । (इत्युत्पतन्तीं पताकां दर्शयति ।)

(नेपथ्ये काहलध्वनिः ।)

**राजा**—(आकर्ण्य ।) देवि, पश्य पश्य जगन्नाथदेवस्य विजयसमयो जातस्तदाकलयामि श्रीकृष्णचैतन्यदेवस्यागमनम् । (इति तथा कृत्वा सहर्षम् ।) अयमयं श्रीकृष्णचैतन्यः । पश्य पश्य ।

अविरलजनसङ्घे सर्वमूर्धोर्ध्ववर्ती
स्फुरति भगवतोऽयं मण्डलः श्रीमुखस्य ।
तरदुरुविधहंसे वारिराशाविवोच्चैः
कलय किमपि हेम्नः पद्ममुद्दण्डनालम् ॥ १४ ॥

**देवी**—अज्जउत्त, अह्माणं उस्सवादो उस्सवान्तरमापडिदं । जदो जअण्णाहदंसणत्थिणीणं गोरचन्ददंसणं जादम् । (ख)

(संस्कृतेन ।)

महःपूरः सद्यो विषयरससंशोषणविधौ
प्रचण्डो मार्तण्डव्यतिकर इवास्य प्रसृमरः ।

---

(क) देव सत्यमेवैषा जनश्रुतिः ।

(ख) आर्यपुत्र, अस्माकमुत्सवान्तरमापतितम् । यतो जगन्नाथदर्शनार्थिनीनां गौरचन्द्रदर्शनं जातम ।

अहार्यं माधुर्यं भगवदनुरागामृतकिरो
महावर्ष्मा कोऽयं कनकनिधिरक्ष्णोः पथि गतः ॥ १५ ॥

अपिच—

निर्मञ्छयानि विधुभिर्मुखबिम्बमस्य
नीराजयानि च रुचं कनकप्रदीपैः ।
संपूजयानि पदपद्ममसुप्रसूनैः
प्रत्याददानि करुणामपि लक्षदेहैः ॥ १६ ॥

(इति प्रणमति ।)

**राजा**—यथार्थोऽयमनुभवो भवत्याः । तदाकलय श्रीजगन्नाथोऽपि स्नानालयमध्यारूढः ।

**देवी**—(आलोक्य प्रणमति ।)

(नेपथ्ये पुनः काहलध्वनिः ।)

**राजा**—देवि, पश्य पश्य श्रीजगन्नाथस्नानम् ।

**देवी**—(उभयतो दृष्टिमाधाय ।) अज्जउत्त, महज्जेव कोदूहलं । (क)

**राजा**—किं तत् ।

**देवी**—(संस्कृतेन ।)

अन्योन्याभिमुखस्थितौ विनिमिषावन्योन्यसंदर्शने
स्नानाम्भोनयनाम्भसोः प्लुततनू दुर्वारया धारया ।
कारुण्यैकमहानिधौ भवभयप्रध्वंसनैकौषधी
देवौ तुल्यरुची पुरो विलसतः प्रश्यामगौरावपि ॥ १७ ॥

**राजा**—सत्यमेतत् ।

**देवी**—अज्जउत्त, णिव्वूढो सिणाणमहूसवो देअस्स । जदो दक्खिणामुहविलोअणक्खणे अदो सरइ गोरचन्दमा । (ख)

---

(क) आर्यपुत्र, महदेव कौतूहलम् ।

(ख) आर्यपुत्र, निर्व्यूढः स्नानमहोत्सवो देवस्य । यतो दक्षिणामुखविलोकनक्षणे अन्यथा सरति गौरचन्द्रमाः ।

राजा—एवमेव ।

अग्रतोऽस्य विरलायते जनः पृष्ठतस्त्वविरलायते पुनः ।
पार्षदास्तु परितो भुजाभुजि श्रद्धया विदधति स्म मण्डलम् ॥१८॥

(नेपथ्ये)

अनवसरतामभ्यायाते प्रभुर्जगदीश्वरे
विरहविधुरां हन्तावस्थां जगाम यतीश्वरः ।
भवति विशदप्रेमानन्दावतारतया यदा
ह्यभिनिविशते यस्मिंस्तस्मिंस्तदैव स तन्मयः ॥ १९ ॥

राजा—(आकर्ण्य) अये ! निश्चितमिदमुक्तं काशीमिश्रेण । तत् पुनराकलयामि वाक्यशेषम् । (इति सावधानस्तिष्ठति पुनस्तत्रैव ।)

स्नानं नो तुलसीनिषेचनविधिर्नो चक्रसंदर्शनं
नो नामग्रहणं च नो नतिततिर्नो हन्त भिक्षापि नो ।
श्रीनीलाचलचन्द्रमोऽनवसरव्याजात्स्वयैवेच्छया
स्वीकृत्य त्वद्वियोगदुःखमनिशं निःस्पन्दमाक्रन्दति ॥ २० ॥

राजा—अहो प्रमादो यावदनवसरं तावदेव चेदेवं स्यात्तदा किं भवति ! (पुनस्तत्रैव) ।

नान्योऽप्युपायः प्रियकीर्तनस्य संकीर्तनानन्दधुमन्तरेण ।
रसान्तरायेति यदेव कर्तुं स्वरूप एवोद्यममातनोति ॥ २१ ॥

राजा—भद्रं भो भद्रम् । (देवीं प्रति ।) प्रिये, त्वमितोऽपसर । आकारयामि तावदेनं काशीमिश्रमिति ।

देवी—जह आणवेदि । (क) (इति निष्क्रान्ता ।)

(ततः प्रविशति काशीमिश्रः ।)

काशीमिश्रः—जयति जयति देवः ।

राजा—मिश्र, कथय किमुक्तं भवता ।

काशीमिश्रः—यदुक्तं तथैव तत् ।

---

(क) यथाज्ञापयति ।

**राजा**—कथय स्वरूपगोस्वामिना किं मन्त्रितमस्ति ।

**काशीमिश्रः**—भगवता स्वीकृते तथाविधविरहवैकल्यानुभवे तदपनोदार्थं सकलैरेव सुहृद्भिः सह मन्त्रितम् । अद्य सायं यदि गोपीनाथविजयदर्शनानन्तरं भगवता मधुरतरभगवत्कीर्तनं श्रूयते तदा रसान्तरं भवति । तस्मिंश्च सति विरहावेशः श्लथत इति संमन्त्र्य रोहिणीकुण्डसविधे परमाप्तैस्तदीयहृदयज्ञैरेव कतिपयैर्मधुरमधुरं कीर्तनमारब्धितमस्ति ।

**राजा**—मिश्र, कथमिदमालोक्यते ।

**काशीमिश्रः**—जगतीं चेदारोहसि ।

**राजा**—तथैव क्रियते । (इति तेन सह तदारोहं नाटयति ।)

(नेपथ्ये मधुरतरसंकीर्तनकलकलः ।)

**काशीमिश्रः**—(निरूप्य) भो महाराज, पश्य पश्य ।

विरहव्यथैव मूर्ता करुणो रस एव मूर्तिमान्दिवसम् ।
आसीद्य एष संप्रति कीर्तनकलतोऽयमन्यथा जातः ॥ २२ ॥

**राजा**—भवति हि ।

आनन्दकन्दलितमस्य वपुर्यदायं
भावं स्पृशत्यथ तमेव बहिर्व्यनक्ति ।
यैः पूर्यते स्फटिकजा घटिका रसैस्तै-
स्तद्वर्णभाग्भवति तानुपदर्शयन्ती ॥ २३ ॥

(पुनर्नेपथ्ये गानध्वनिः ।)

**राजा**—(आकर्ण्य) किमेतद्गीतम् ।

**काशीमिश्रः**—भगवद्वंशीनादमाधुरीप्रतिपादकमिदं गौडीयभाषोपनिबद्धमिति देवेन नाकलय्यते ।

**राजा**—अहो, चित्रम् । यदेषः

गौरः कृष्ण इति स्वयं प्रतिफलन्पुण्यात्मनां मानसे
नीलाद्रौ नटतीह संप्रथयते वृन्दावनीयं रसम् ।
आद्यः कोऽपि पुमान्नवोत्सुकवधूकृष्णानुरागव्यथा-
स्वादी चित्रमहो विचित्रमहहो चैतन्यलीलायितम् ॥ २४ ॥

(पुनर्निरूप्य ।) अये, चिरकालमेकस्यैव गीतपदस्य ध्रुवमेव गीयते ।

**काशीमिश्रः**—प्रथमतो यस्यां लीलायां मनः प्रविवेश; न ततः पुनरावर्तते ।

**राजा**—भवत्येवमेव । (इति पुनरालोक्य । सहर्षम् ।) अहो, कीदृशमस्य माधुर्यम् । पश्य पश्य ।

जानूत्क्षेपभुजावधूननपदन्यासाक्षिविक्षेपणै-
　हन्तानन्दयतो मनांसि सुहृदां विश्वं जडीकुर्वतः ।
निष्ठेवैर्मुखमस्य भाति सुभगस्मेरं महानन्दतः
　फेनैर्हेमसरोरुहं वृतमिव स्त्यानैरिवेन्दुर्हिमैः ॥ २५ ॥

(पुनरालोक्य । सविस्मयम् ।) अये,

क एष निःसाध्यसमास्यमण्डलान्निष्ठेवमाकृष्य पिबन्प्रमोदते ।
चन्द्राद्बहिर्भूतमिवामृतद्रवस्योल्लासिनं फेनमहो चकोरकः ॥ २६ ॥

**काशीमिश्रः**—शुभानन्दनामायं वैष्णवः ।

**राजा**—अहो, एकमेव गीतध्रुवपदम्, एक एव तारस्वरः, एक एवोल्लासो गाथकानाम्, यामद्वयं यावद् भगवतोऽपि समान एवानन्दप्रकाशचमत्कारः । तदमीभी रसान्तरेण विरहावेशतरङ्गो दूरीकृतः । प्रकृतरसान्तरं केनान्तरयन्तु; उभयथैव भगवत आह्निकविगमः ।

**काशीमिश्रः**—तथापि विरहावेशो भक्तानां दुःसहः । (इति पुनर्निभाल्य ।) देव, निर्व्यूढोऽयं नृत्योत्सवः; यदमी भगवन्तं धृत्वा स्वावासं प्रति गच्छन्ति ।

**राजा**—भद्रं संभाव्यते कदाचिदाह्निकमपि तदधुना मिश्र, भगवत्समीपं गम्यताम् । अहमिहैव क्षणं निद्रामि ।

**काशीमिश्रः**—यथाज्ञापयसि । (इति निष्क्रान्तः ।)

**राजा**—गतो मिश्रस्तदिह निद्रामि । (इति निद्रां नाटयित्वा पुनरुत्थाय ।) अहो, विभातेयं विभावरी । यतः

---

१. निर्यद्भिः.

अस्ताचलोदयमहीधरयोस्तटान्तं
शीतांशुचण्डकिरणावुपसेदिवांसौ।
तुल्यत्विषौ मृदुतया वहतः प्रगस्य
वर्षीयसः क्षणमिवोपरि लोचनत्वम्॥ २७॥

(इति परितो विलोकयति।)

(नेपथ्ये।)

अहो, महत्कौतुकम्।

प्रातः प्रत्यहमर्घ्यगन्धतुलसीपुष्पादिभिः पूजय-
त्यद्वैते भगवन्तमन्तरसुखावेशोल्लसद्रोमणि।
स्मित्वा तैर्हठतो हृतैरतिरसेनाद्वैतमभ्यर्चय-
न्देवो वुर्वुरितैर्मुखेऽङ्गुलिदलैरुद्वाद्यवाद्यं व्यधात्॥ २८॥

अपिच—

यस्य न्यस्य कराब्जकोषकुहरे पूजोपचारं प्रभोः
पूजां कर्तुमनाः प्रयाति कुतुकादद्वैतदेवोऽन्वहम्।
श्रीनाथः स तदा प्रभोर्गुणनिधेः संदर्शनस्पर्शन-
प्रेमालापकृपाकटाक्षकलया पूर्णान्तरोऽजायत॥ २९॥

**राजा**—अये, कथमयं तुलसीमिश्रः परीक्षामहापात्रं किमपि प्रस्तौति। तच्छ्रोतव्यं यत् सत्वरमित एवाभिगच्छति।

(प्रविश्य।)

**तुलसीमिश्रः**—देव, जगन्नाथस्य रथयात्रा नेदीयसीति गुण्डिचामन्दिरमार्जनक्षालनार्थं स्वयमेव महाप्रभुस्तत्रोद्यतः।

**राजा**—प्रियं मे प्रियम्, किंचिदाज्ञप्तमस्ति।

**तुलसीमिश्रः**—यदाज्ञप्तं तत् काशीमिश्रेणैव संपादितम्।

**राजा**—किं तत्।

**तुलसीमिश्रः**—यावन्तस्तल्लोकास्तावत्य एव संमार्जन्यो, घटास्तु ततोऽधिकाः।

**राजा**—एतावन्मात्रम्।

**तुलसीमिश्रः**—किमन्येन तत्प्रयोजनम् ।

(नेपथ्ये कलकलः ।)

**तुलसीमिश्रः**—देव, पश्य पश्य ।

श्रीहस्तेन विलिप्य चन्दनरसैः प्रत्येकमेषां वपु-
निक्षिप्याप्यधिकंधरं भगवतो निर्माल्यमाल्यानि च ।
उल्लासद्रुममञ्जरीरिव करं संग्राहयञ्शोधिनी-
र्मात्यत्तुङ्गमतङ्गजालसगतिर्गौरो विनिष्क्रामति ॥ ३० ॥

अपिच—

निर्गच्छन्ति मुदा मनोरथरथैः संतोषदन्तावलै-
रत्युल्लासतुरङ्गमैर्भवजये जैत्रा इवामी भटाः ।
रोमाञ्चावलिकञ्चुकाढ्यवपुषोऽश्रान्तस्त्वैर्बिभ्रतो
बाष्पैर्वारुणमस्त्रमेव समदं हुंकारझङ्कारिणः ॥ ३१ ॥

**राजा**—धिग् भूपत्वम् । कदाहमेषां मध्ये यः कश्चिदेव भवन्, भगवन्त-मनुव्रजामि । तुलसीमिश्र, कथमिदं कौतुकमामूलमाकर्ण्यते ।

**तुलसीमिश्रः**—अस्ति कश्चिन्मदीयः पुरुषः स एव सर्वं संमाकल-य्यागतप्रायः ।

**राजा**—प्रियं मे प्रियम् । (प्रविश्य सत्वरः कश्चित् राजानं प्रणम्य) । महा-राज, सर्वमवलोक्यागतम् ।

**राजा**—कथय ।

**पुरुषः**—देव, अवधीयताम् ।

पाणौ कृत्वा मधुरमृदुले शोधनीमूर्ध्वमूर्ध्वं
सर्वैः सार्धं स्वयमयमसौ गुण्डिचामण्डपान्तः ।
लूतातन्तून्मलिनरजसः सारयन्नेव तैस्तै-
र्व्याप्तो गौरः शशधर इव व्यक्तलक्ष्मा बभूव ॥ ३२ ॥

अनन्तरम् ।

हस्ताप्राप्ये कमपि समुपारोप्य कस्यापि चांशे
मा भैषीरित्यहह निगदन्मेघगम्भीरयोक्त्या ।

---

१. मर्कटकाख्यः कीटविशेषः.

अभ्युन्नेत्रः सरजसतनुर्मार्जयित्वोर्ध्वमूर्ध्वं
भित्तीः सिंहासनमथ तलं शोधयामास देवः ॥ ३३ ॥

अपिच—

बहिर्वासोऽञ्चल्यामवकरचयं शोधनिकया
समाहृत्यापूर्य स्वयमथ बहिः सारयति सः ।
क्वचिद् हस्तप्राप्यावधि सरभसं मार्ष्टि च कलं
सुहृद्वर्गैर्गायत्यपि स कुतुकं गापयति च ॥ ३४ ॥

**राजा**—ततस्ततः ।

**पुरुषः**—एवं मूलमण्डपजगन्मोहनभोगमण्डपानां मार्जनानन्तरम्

कूपात्केऽपि समुद्धरन्ति कतरः कस्यापि हस्ते ददौ
सोऽप्यन्यस्य करे स चापरकरे सोऽम्भः करे कस्यचित् ।
इत्थं शृङ्खलया घटानथ नयन्पूर्णानपूर्णांस्त्यजन्
पूर्णापूर्णपरिग्रहत्यजनयोः शिक्षां व्यतानीज्जनः ॥ ३५ ॥

अपिच—

केचिद्गौरगिरा मनोज्ञमतयः सिञ्चन्ति सिंहासनं
भित्तीः केचन केऽपि तस्य करयोर्वार्यर्पणं कुर्वते ।
केचित्तत्पदपङ्कजोपरि घटैः सिञ्चन्ति संतोपत-
स्तत्केऽप्यञ्जलिना पिबन्ति ददते केचिच्च मूर्धन्यपि ॥ ३६ ॥

**राजा**—ततः ।

**पुरुषः**—ततः पूर्ववत्क्रमेण प्रक्षाल्य धौतपादा एव सर्वे स्वस्ववासोभिस्तत्क्रमेण सलिलान्यपसारयांबभूवुः । तथा कृत्वा अङ्गणमुत्तीर्य तच्छोधनारम्भे ।

पङ्क्तीभूयोपविष्टे निजजननिकरे कौतुकान्मध्यवर्ती
चिन्वन्वासःप्रपूरं चिरसमुपचिताः शर्कराश्चत्वरस्य ।
पश्यामः के कतीमा विदधति विचिता इत्यवोचद्यदेश-
स्तर्ह्येवामी प्रमोदादहमहमिकया चेतुमुद्योगमीयुः ॥ ३७ ॥

एवं स्वचरितमिव निरवकरं स्वहृदयमिव स्निग्धं च सर्वतश्चत्वरतलं कृत्वा तेऽमी भगवत्कीर्तनमारेभिरे । तथा हि—

क्षोभं क्षोणीमृगाक्ष्याः स्थगनमिह रवेः कम्पमाशावधूनां
स्तम्भं वातस्य कुर्वन्नमरपरिवृढस्यास्तमक्ष्णां सहस्रे ।
स्वेदं सप्तर्षिगोष्ठ्याः परमरसमयोल्लासमौत्तानपादे-
र्ध्यानध्वंसं विरिञ्चेः स जयति भगवत्कीर्तनानन्दनादः ॥ ३८ ॥

ततश्च—

नर्तित्वा क्षणमेव चारु मधुरं गौरो हरिर्नर्तयां-
चक्रेऽद्वैततनूजमेकमधुरं गोपालदासाभिधम् ।
नृत्यन्नेव स मूर्च्छितः सुखवशाद्देहान्तरं यन्निवा-
द्वैते खिद्यति पाणिपद्मचलनाद्देवः स तं प्राणयत् ॥ ३९ ॥

ततो हरिध्वनिरुच्चैरुच्चचार ।

राजा—अहो मे दुरदृष्टं यदेतदपि न दृष्टम् ।

पुरुषः—ततो नरसिंहनाथमण्डपं च संस्कार्य धावयित्वेन्द्रद्युम्नसरसि कृतजलविहारः सर्वैरेव तदभ्यर्णवर्तिनि कुसुमोद्याने विशश्राम । तदनु वाणीनाथपट्टनायकेनोपनीतानि भगवत्प्रसादादीनि सर्वैरेव सेवितानि ।

(नेपथ्ये)

नेत्रोत्सवः सर्वजनस्य भावी श्वः श्रीपतेः श्रीमुखदर्शनेन ।
इतीव चित्तोत्सव एष जातो महोत्सवस्यापि महोत्सवो यः ॥ ४० ॥

राजा—महापात्र, काशीमिश्रोऽयं यथा लपति तथा मन्ये भवन्तमेव श्रावयति; तदधुना नेत्रोत्सवस्य कृताकृतावेक्षणमाचरतु भवान् ।

तुलसीमिश्रः—यथाज्ञापयसि । (इति निष्क्रान्तः ।)

(ततः प्रविशति काशीमिश्रः ।)

काशीमिश्रः—अहो, अतिमधुरं भावि ।

काशीश्वरक्षपितलोकचयः पुरस्ताद्
गोविन्दपालितविलासगतिः परस्तात् ।

पार्श्वद्वये च सपुरीश्वरसस्वरूपो
नेत्रोत्सवाय स भविष्यति गौरचन्द्रः ॥ ४१ ॥

**राजा**—अहो, मनसा सह संकथयन् मामपि नावलोकते मिश्रः ।

**मिश्रः**—(दक्षिणेऽक्षि निक्षिप्य) अहो, निष्पन्नमण्डनैव रथत्रयी विशेषतोऽयं श्रीजगन्नाथस्य रथः ।

उत्सर्पिदर्पणसहस्रविभावितश्रीः
सच्चारुचामरसुचीनचयैः परीतः ।
तेजोमयः समयमेत्य विराजमान
आनन्दयन्नयनमेव रथो विभाति ॥ ४२ ॥

(संमुखमवलोक्य ।) अये कथमिहैव राजा । (उपसृत्य ।) जयति जयति महाराजः । महाराज, इह स्थितेनैव त्वया रथारोहणं भगवतोऽवलोकनीयम्, पश्चात् स्नानोत्तरं स्वसेवा विधेया ।

**राजा**—रथविजयसेवा मे नियतापि तथा मां नोत्कण्ठयति यथा महाप्रभोर्नृत्यदर्शनस्पृहा ।

**काशीमिश्रः**—रथारोहणे जाते सति यामार्धान्तरित एव महाप्रभोर्नृत्यारम्भो भावी ।

**राजा**—(सवितर्कम् ।)

इतश्चेत्पश्येयं भवति परितोषो न मनस-
स्ततो वा पश्येयं तदपि सुलभं नैव भवति ।
प्रवेशस्तद्गोष्ठ्यां मम न घटते तद्गततया
तदन्तर्वर्तित्वात्कथमु कलये तस्य नटनम् ॥ ४३ ॥

तथापि यावन्नटनं तावदेव तत्रैव स्थेयम् । तत्कृपादेव्येव शरणम् ।

**काशीमिश्रः**—महाराज, कञ्चुकिद्वारा महर्षिभिरभ्यर्थितमस्ति भगवतो गौरचन्द्रस्य नृत्यदर्शनार्थमिहावस्थानम् ।

**राजा**—सुखेन पश्यन्तु, कृतार्थयन्तु लोचने जनुश्च ।

**काशीमिश्रः**—तत्त्वरस्व । भगवतो रथारोहणकालः संनिकृष्ट एव ।

**राजा**—एवमेव ।

**काशीमिश्रः**—अहमपि भगवन्निकट एव गच्छामि । (इत्युभौ निष्क्रान्तौ ।)

(ततः प्रविशन्ति कञ्चुकिनोपगम्यमानास्तामेव वडभीमारूढा महिष्यः ।)

**कञ्चुकी**—देव्यः पश्यन्तु ।

संप्राप्तो रथकंधरं तनुभृतां नेत्रैर्मनोभिः समं
श्रीनीलाचलचन्द्रमा रथपथं संप्राप गौरो हरिः ।
भावाक्रान्ततयैव नेत्रमनसी तेषां वरं मुञ्चतः
पूर्वं नैव परं तु पूर्वपरयोः सत्यं बलीयान्परः ॥ ४४ ॥

अपिच—

मण्डलैस्त्रिभिरसौ स्वजनानामावृतो जयति काञ्चनगौरः ।
बीजकोष इव वारिरुहस्य प्रोल्लसत्तरसहस्रदलस्य ॥ ४५ ॥

**देव्यः**—(सोत्कण्ठं निरीक्ष्य प्रणमन्ति ।)

**कञ्चुकी**—देव्यः, पश्यन्तु पश्यन्तु ।

काशीश्वरोऽजनि बहिर्वलयस्य मुख्यो
गोविन्द उत्तमतमोऽजनि मध्यमस्य ।
अभ्यन्तरस्य मणिवज्जयति स्वरूपः
सामाजिकः किल पुरीश्वर ईश्वराग्रे ॥ ४६ ॥

(क्षणं निभाल्य ।) अहो महत्कौतुकम् ।

सङ्कोचाद्विरलीकरोति न जनांश्चैतन्यपादाश्रयाँ-
स्तैस्तैर्गाढनिरन्तरावृततया गौरं च नो पश्यति ।
सोत्कण्ठं नयनद्वयीं तत इतो व्यापारयन्नन्तरं
संप्रेप्सुर्हरिचन्दनांसविलसद्बाहुर्नृपो भ्राम्यति ॥ ४७ ॥

**देव्यः**—अस्स जादिसी उक्कण्ठा तादिसं ज्जेव ववहरदि । (क)

**कञ्चुकी**—अहो प्रमादः ।

राजाक्षिवर्त्मभिदुरं हरिचन्दनोऽसौ
श्रीवासमन्तरयति स्वकरेण मन्दम् ।

---

(क) अस्य यादृश्युत्कण्ठा तादृशमेव व्यवहरति ।

रुष्टो जघान तमसौ प्रतिरुष्टमेनं
राजैव सान्त्वयति सानुनयं नयेन ॥ ४८ ॥

**देव्यः**—तादिसाणं निरवेच्छाणं को वराओ हरिचन्दणो । (क)

**कञ्चुकी**—पश्यन्तु पश्यन्तु ।

उद्दामताण्डवविधौ जगदीश्वरस्य
सर्वे परस्परकरग्रहणं विधाय ।
बाहू प्रसार्य परितः प्रदिशन्ति शश्वद्
भूमौ स्खलत्तरतनोः क्षतशङ्कयैव ॥ ४९ ॥

**देव्यः**—दाणिं सुहेण दीसइ । (ख)

**कञ्चुकी**—पश्यन्तु ।

क्षणमुत्प्लवते मृगेन्द्रकल्पं क्षणमाधावति मत्तनागतुल्यम् ।
भ्रमति क्षणमप्यलातचक्रप्रभमानन्दतरङ्गतो यतीन्द्रः ॥ ५० ॥

अपिच—

अन्तर्भावविदामुदारमनसामाद्यः स्वरूपो यदा
यद्गातुं दिशतीदमेव सकलः प्रीत्यैव तद्गायति ।
तस्यार्थस्तनुमानिव प्रतिफलन्गौरो नरीनृत्यते
स्तम्भाश्रुस्वरभङ्गकम्पपुलकप्रस्वेदमूर्च्छास्मितैः ॥ ५१ ॥

**देव्यः**—अच्चरिअं क्खु एदं पेम्मानन्दचमक्कारस्स । (ग)

**कञ्चुकी**—पश्यन्तु ।

आनन्दाम्बुनिधेर्न वेद्मि कतमैरुच्चावचैरूर्मिभि-
र्नृत्योन्मादमदेन गौरभगवत्यानन्दमूर्च्छां गते ।
निष्ठेवः कठिनोऽस्त्रमस्त्रवदभूच्छ्वासो न संलक्ष्यते
कान्तिः केवलमुज्ज्वलैव सुहृदामाश्वासबीजायते ॥ ५२ ॥

---

(क) तादृशानां निरपेक्षाणां को वराको हरिचन्दनः ।

(ख) इदानीं सुखेन दृश्यते ।

(ग) आश्चर्यं खल्विदं प्रेमानन्दचमत्कारस्य ।

देव्यः—ईसरो त्ति संवित्तिज्जेअ णो जीअणं धारेदि। अण्णधा एदं किं दंसिदुं सक्कीअदि। (क)

कञ्चुकी—(पुनर्निभाल्य) अहो जीवितमहो जीवितम्।

रोमाञ्चाः पुनरुन्मिषन्ति नयने भूयोऽपि पर्यश्रुणी
निष्ठेवश्च पुनः प्ररोहति पुनः श्वासोऽधरं धावति।
सर्वेषामभितोऽभितः समुदयत्याह्लादकोलाहलो
देवो जागरयांचकार हृदयं स्वानन्दमूर्च्छां त्यजन्॥ ५३॥

देव्यः—अम्महे जीविदम्ह जीविदम्ह। (ख)

कञ्चुकी—(पुनर्निभाल्य) अहो, अद्भुतम्।

येनैव गीतेन बभूव मूर्च्छा तेनैव भूयोऽजनि संप्रबोधः।
किमेक एवैष स कोऽपि मन्त्रः प्रयोगसंहारविधौ स्वतन्त्रः॥ ५४॥

अपिच—

नृत्योन्मादतरङ्गिणीर्बलवतीरानन्दवात्या क्रमा-
दरयुल्लासयति स्म तत्र जनितो वीचीतरङ्गक्रमः।
कश्चित्कश्चिदनीनशत्तमपरस्तं चापरस्तं पर-
श्चेत्यानन्दतरङ्गजैव विविधा वृत्तिर्न गीतार्थजा॥ ५५॥

अहो स्वरूपस्य प्रेममाधुर्यम्। तथा हि—

उत्थाय मन्दमुपविश्य सुखोर्मिवेग-
निघ्नस्य तर्जनिकया लिखतो धरित्रीम्।
आशङ्कितः क्षतिकृते सदयं स्वरूपो
देवस्य पाणिमरुणन्निजपाणिनैषः॥ ५६॥

(पुनर्निरूप्य) अहो कष्टम्।

गच्छत्येष जगत्पती रथगतो बाहू प्रसार्य स्वयं
प्रीत्योत्थापयितुं रथोदरमिव श्रीगौरचन्द्रं पुरः।

---

(क) ईश्वर इति संवित्तिरेव नो जीवनं धारयति। अन्यथैतत्किं दर्शयितुं शक्यते।

(ख) अहो, जीवितास्मो जीविताः स्मः।

नृत्यन्नेव स चापसर्पति परं वास्योदयेनात्मनो
द्वावेवाक्षिपथं व्यतीयतुरहो भाग्यं विशश्राम नः ॥ ५७ ॥

(इति देवीरवतार्य ताभिः सह निष्क्रान्तः ।)

(ततः प्रविशति राजा काशीमिश्रश्च ।)

**राजा**—अहो, निर्व्यूढो रथोत्सवः ।

गुण्डिचागृहमवस्थित एकः प्राप्तवानुपवनान्तरमन्यः ।
देवयुग्ममिदमेव जनानां चित्तमेव युगपत्प्रविवेश ॥ ५८ ॥

**काशीमिश्रः**—होरापञ्चम्यां भगवत्याः श्रियो देव्याः प्रयाणयात्रा सर्वतश्चमत्कारिणी यथा भवति तथा कार्या; छत्रचामरादीनि भगवद्भाण्डारागारे यावन्ति सन्ति यावन्ति वा, मम कोषागारेषु सन्ति तावन्त्येव समानेयानि; यथा रथोत्सवादपि लोचनचमत्कारकारकत्वेन मूर्त एवाद्भुतरसो भवति ।

**काशीमिश्रः**—यथाज्ञापयति ।

**राजा**—त्वमद्यारभ्य तथा कुरु, अहमपि पुरं प्रविशामि (इति निष्क्रान्तः ।)

**काशीमिश्रः**—(स्वगतम्) आरामान्तरमागतेषु भगवत्पार्षदेष्वद्वैतादिषु च समस्तेषु महत्सु किं वृत्तमिति निभालयामि । (इति जगन्नाथवल्लभाख्यमुपवनं सहर्षमालोक्य ।) अहो, भगवतः श्रीकृष्णचैतन्यस्यैव साक्षात् ।

श्वो मे परश्वो मम तत्परेऽह्नि ममापरेद्युर्मम चापरेऽह्नि ।
ममेति भिक्षादिननिर्णयेनाद्वैतादयः कौतुकिनो बभूवुः ॥ ५९ ॥

तदधुनात्र मम प्रवेशोऽयोग्यस्तदहमासन्नस्य होरामहोत्सवस्य सामग्रीसमवधानाय गच्छामि । (इति निष्क्रान्तः ।)

(ततः प्रविशति श्रीकृष्णचैतन्यः परितोऽद्वैतादयश्च ।)

**श्रीकृष्णचैतन्यः**—स्वरूप, यद्यपि जगन्नाथो द्वारकालीलामनुकरोति तथापि गुण्डिचाव्याजेन वृन्दावनस्मारकेष्वेतेषूपवनेषु विहर्तुं प्रत्यब्दमेव नीलाचलं परित्यज्य सुन्दराचलमागच्छति । कथं देवीं श्रियं परित्यजति ।

**स्वरूपः**—स्वामिन्, वृन्दावनस्मारकेष्विति यदुक्तं स्वयमेव; तदेव सिद्धान्तः । न हि वृन्दावने श्रिया सह विहारः; अपि तु गोपाङ्गनाभिरेव ।

श्रीकृष्णचैतन्यः—तथाप्येषा कोपिनी भवति ।

स्वरूपः—प्रणयिनीनां प्रकृतिरेवेयं यत्स्वायोग्यतां नेक्षन्ते ।

(नेपथ्ये महावादित्रनिर्घोषः ।)

सर्वे—(आकर्ण्य) अहो, निमेषमात्रमिव दिनचतुष्टयं जातम् । यदयं होरापञ्चमीमहोत्सवः प्रत्यावर्तते ।

श्रीकृष्णचैतन्यः—यथाप्रस्तावमेवायं भगवत्याः श्रीदेव्याः कोपप्रयाण-महोत्सवः । तदयमालोकनीयो भवति ।

सर्वे—एवमेव । ( इत्यालोकनसमुचितं स्थलमुपसर्पन्ति ।)

( पुनर्नेपथ्ये जयजयध्वनिः ।)

स्वरूपः—( आलोक्य ) भगवन्,

मानस्य क्रम एष नैव यदियं स्वैश्वर्यविख्यापकै-
नीनादिव्यपरिच्छदैः स्वयमहो देवं प्रतिक्रामति ।
व्यक्तं रौद्ररसोऽयमम्बुधिभुवः क्रोधस्य यत्स्थायिनो
भूयानेव विकार एष विदितं वैदग्ध्यमस्याः परम् ॥ ६० ॥

पुरीश्वरः—स्वरूप, सत्यमेव किंतु पश्यतां पुनरद्भुत एव रसः ।

तथा हि—

पताकाभिर्देवी कलहमनु भोगीन्द्ररसना
सहस्रस्य द्वाभ्यां युगपदिव लीढा दशदिशः ।
नभो वापीहंसैरिव मृदुचलैश्चामरचयैः
सितच्छत्रैः फुल्लद्बलकमलौघैरिव वृता ॥ ६१ ॥

अपि च—

सुधूपानां धूमैः प्रतिदिशमुदीर्णैरुपचिते
घनौघे गम्भीरं ध्वनति मुरजादिव्यतिकरे ।
बलाकानां श्रेण्यामिव धवलसत्तोरणततौ
चलन्त्यामुन्मत्ता इव दधति लास्यानि शिखिनः ॥ ६२ ॥

अद्वैतः—

पुरो वारस्त्रीभिर्गुणविजितरम्भाप्रभृतिभि-
र्लसल्लीलालास्यं मुहुरभिनयन्तीभिरभितः ।
समन्ताद्दासीभिर्व्यजनचयताम्बूलपुटिका-
मणीभृङ्गारादिग्रहणचटुलाभिः परिवृता ॥ ६३ ॥

अपिच—

विमानस्य म्लानीमिव विदधतीं मुग्धमहसा
चतुर्दोलीं[1] चामीकरमणिमयीमुत्थितवती ।
अतिक्रोधान्धापि स्मरभरसमाभुग्नहृदया
पयोधेः पुत्रीयं पितृजनितदर्पेव वलते ॥ ६४ ॥

**स्वरूपः**—( सोपहासम् ) अहो, मानवैदग्ध्यमस्याः ।

**श्रीकृष्णचैतन्यः**—स्वरूप, कीदृशं प्रणयकोपवैदग्ध्यम् ।

**स्वरूपः**—या यादृशी तस्याः खलु तथाविधं वैदग्ध्यम् ।

**श्रीकृष्णचैतन्यः**—तथापि श्रृणुमः ।

**स्वरूपः**—कदाचित् कृतापराधे प्रणयिनि श्रीव्रजराजकिशोरे सविधमागत्य समुचितं व्याहरति सति—

किं पादान्तमुपैषि नास्मि कुपिता नैवापराद्धो भवा-
न्निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथवा ।
योग्या एव हि भोग्यतां दधति ते तत्किं मयाऽयोग्यया
तेनाद्यावधि गोकुलेन्द्रतनय स्वाच्छन्द्यमेवास्तु ते ॥ ६५ ॥

इदं कोपवैदग्ध्यम् । प्रकारान्तरं च ।

दूरादुत्थितमन्तिकं मयि गते पीठं करेणापि तं
स्मित्वा भाषिणि भाषितं मृदुसुधानिःस्यन्दि मन्दं वचः ।
आरूढेऽर्धमथासनं प्रकटितो हर्षस्तयाश्लिष्यति
प्रत्याश्लिष्टमवामयैव मनसो वाम्यं तयाविष्कृतम् ॥ ६६ ॥

---

१. यानविशेषः.

श्रीकृष्णचैतन्यः—पूर्वतोऽपि सुरसमिदम् ।

श्रीवासः—(सपरिहासम् ।) गोपाललल्लनानां केतादृशमैश्वर्यम् । ऐश्वर्यं हि मदहेतुः ।

अस्याः पश्यत भो मदस्य महिमा दासीकुलेनेश्वरी-
गर्वोत्सेकमदोद्धुरेण यदमी बद्धाः कटीरोधसि ।
मुख्या एव जगत्पतेः परिजनाः प्रत्येकमाकर्षता
पात्यन्ते स्म निजेश्वरीपदपुरः प्रापय्य चौरा इव ॥ ६७ ॥

भृत्यापराधे स्वामिनो दण्ड इत्येव श्रुतम् । इदं तु तद्विपरीतमेवेत्यहो अत्यद्भुतम् ।

स्वरूपः—(श्रीवासं प्रति ।) भोः पण्डित, पश्य पश्य तव देव्या वैदग्ध्यम् ।

अचेतनस्यास्य रथस्य को वा मन्तुः कथं ताड्यत एष भृत्यैः ।
यास्याम्यदूरेऽहमितीश्वरेण प्रोक्ते कथं वाशमि दीर्घकोपः ॥ ६८ ॥

श्रीवासः—स्वामिन्, ईश्वर्या हीयमेव रीतिः ।

श्रीकृष्णचैतन्यः—श्रीवास, नारदत्वेन भवान् द्वारकाविलासप्रिय एव; तेन तुभ्यमैश्वर्यांश एव रोचते, स्वरूपस्य वृन्दावनप्रियत्वात्तथाविधानन्दवैदग्ध्यांश एव प्रेयान् ।

अद्वैतः—भगवन्,

भवत्पदाम्भोरुहयोरनुग्रहादस्मादृशामीदृशमीदृशं महत् ।
बभूव सौभाग्यमहोमहोत्सवा मूर्ता इवामी विविशुर्दृशोः पथि ॥ ६९ ॥

श्रीकृष्णचैतन्यः—किं ते भूयः प्रियमुपकरोमि ।

अद्वैतः—किं भूयः प्रियमुपकरिष्यसि ।

हेलाखेलायितेनातनि कलिमथनं ख्यापितो भक्तियोगो
व्यक्तं तत्रापि नीतः परमसुनिभृतः प्रेमनामा पदार्थः ।
क्वापि क्वापि प्रकीर्णा पुरुतरसुभावुका भावुकानां
तत्राप्याभीरनारीमुकुटमणिमहाभावविद्यानवद्या ॥ ७० ॥

अस्माकं तु—

धर्मार्थकामेषु परैव कुत्सा लिप्सा न मोक्षस्य च कर्हिचिन्नः ।
एभिः समस्तैस्तव देव लोकैर्लोकान्तरेऽप्यस्तु सहैव वासः ॥ ७१ ॥

**श्रीकृष्णचैतन्यः**—एवमेव ।

वृन्दारण्यान्तरस्थः सरसविलसितेनात्मनात्मानमुच्चै-
रानन्दस्यन्दबन्दीकृतमनसमुरीकृत्य नित्यप्रमोदः ।
वृन्दारण्यैकनिष्ठान्स्वरुचिसमतनूंकाययिष्यामि युष्मा-
नित्येवास्तेऽवशिष्टं किमपि मम महत्कर्म तच्चातनिष्ये ॥ ७२ ॥

अपिच—

दास्ये केचन केचन प्रणयिनः सख्ये त एवोभये
राधामाधवनिष्ठया कतिपये श्रीद्वारकाधीशितुः ।
सख्यादावुभयत्र केचन परे ये वावतारान्तरे
मय्याबद्धहृदोऽखिलान्वितनवै वृन्दावनासङ्गिनः ॥ ७३ ॥

**अद्वैतः**—तथास्तु ।

निजेच्छया प्रापय यद्यदेव स्थलान्तरं नो वपुरन्तरं वा ।
तवैतदाश्चर्यचरित्रमेव जातिस्मरा एव चिरं स्मरामः ॥ ७४ ॥

तथापीदमस्तु ।

आकल्पं कवयन्तु नाम कवयो युष्मद्विलासावलीं
तामेवाभिनयन्तु नर्तकगणाः शृण्वन्तु पश्यन्तु ताम् ।
सन्तो मत्सरतां त्यजन्तु कुजनाः सन्तोषवन्तः सदा
सन्तु क्षोणिभुजो भवच्चरणयोर्भक्त्या प्रजाः पान्तु च ॥ ७५ ॥

**भगवान्**—तथैवास्तु । (निष्क्रान्ताः सर्वे ।)

इति चैतन्यचन्द्रोदये महामहोत्सवो नाम दशमोऽङ्कः ।

यस्योच्छिष्टप्रसादादयमजनि मम प्रौढिमा काव्यरूपी
वाग्देव्या यः कृतार्थीकृत इह समयोत्कीर्त्य तस्यावतारम् ।

यत्कर्तव्यं मयैतत्कृतमिह सुधियो येऽनुरज्यन्ति तेऽमी
शृण्वन्त्वन्यान्नमामश्चरितमिदममी कल्पितं नो विदन्तु ॥ १ ॥
श्रीचैतन्यकथा यथामति यथादृष्टं यथाकर्णितं
जग्रन्थे कियती तदीयकृपया बालेन येयं मया ।
एतां तत्प्रियमण्डले शिव शिव स्मृत्येकशेषं गते
को जानातु शृणोतु कस्तदनया कृष्णः स्वयं प्रीयताम् ॥ २ ॥
दृष्टा भागवताः कृपाप्युपगता तेषां स्थितं तेषु च
ज्ञातं वस्तु विनिश्चितं च कियता प्रेम्णापि तत्रासितम् ।
जीवद्भिर्न मृतं मृतैर्यदि पुनर्मर्तव्यमसद्विधै-
रुत्पद्यैव न किं मृतं बत विधे रामाय तुभ्यं नमः ॥ ३ ॥
शाके चतुर्दशशते रविवाजियुक्ते
गौरो हरिर्धरणिमण्डल आविरासीत् ।
तस्मिंश्चतुर्नवतिभाजि तदीयलीला-
ग्रन्थोऽयमाविरभवत्कतमस्य वक्त्रात् ॥ ४ ॥

समाप्तमिदं चैतन्यचन्द्रोदयं नाम नाटकम् ।

# चैतन्यचन्द्रोदयनाटकस्थश्लोकानां मातृकावर्णक्रमेणानुक्रमणी।

